# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २० एप्रिल् - २००३ सञ्चिका - १



पुराणकथावली

२४



राजगुरोः मार्गदर्शनम् (वेतालकथा)

१९



मायासरोवरः - १३

१३



विघ्नेश्वरः - १६

४५



## अन्तरङ्गम्




SUBSCRIPTION

For USA and Canada
Single copy $2
Annual subscription $20
*Remittances in favour of*
*Chandamama India Ltd.*
to
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

उपायनीक्रियताम्
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
चेन्नै -
Ph - 044-22347384, 22347399
e-mail : advertisements@chandamama.org
देहली -
मोना भाटिया
Ph - 011-26515111/ 26565513/26565516
मुम्बयी -
शकीलमुल्ला
Ph - 022-2661599/ 2661946/2653057



*संस्थापकौ –*
चक्रपाणिः नागिरेड्डी च

# प्रबुद्धपौराणाम् आवश्यकता

धर्मः जीवनक्रमसम्बद्धः । किन्तु मतं तु आचारसम्बद्धम् । अतः एतत् वैयक्तिक-विषयतां गतम् । केचन जनसमुदायाः स्वजीवनशैल्याः अनुगुणं विविधैः शब्दैः विविधानि मतानि निर्दिष्टवन्तः । ततश्च ते स्वपरिसरानुगुणं स्वस्य मतस्य विविधान् सङ्केतान् नियमान् व्रतादिकानि च निश्चितवन्तः । एवं लोके विविधानि मतानि उत्पन्नानि । स्वमताचरणरतैः अन्ये तु पीडनीयाः न सन्ति । तथापि अद्य दुरदृष्टवशात् केचन लघुमनस्काः असहनशीलाः जनाः स्वधर्माचरणरतानाम् अन्येषां व्यवहारे अवरोधम् आचरन्तः दृश्यन्ते । एतादृशक्रियाणां फलमस्ति परमतासहिष्णुता । एतेषु दिनेषु वयं पश्यामः यत् मतकारणम् आश्रित्य भयोत्पादकाः आतङ्कवादिनः च सामाजिकसामरस्यं नाशयन्तः सन्ति इति ।

अस्माकं राष्ट्रपतेः डा० अब्दुल्कलाममहाभागस्य वचनं श्रूयताम् एतद्विषये । सः वदति – ''मतीयकलहनिवारणे धर्मः आध्यात्मिकशक्तिरूपेण रूपितः भवेत् । तदा एव वयं प्रगतिविषयकवैपरीत्यानि निवारयितुं शक्नुयाम'' इति । यदा मुम्बयीनगरे कश्चन बालकः – 'कथं मतीया हिंसा निवारयितुं शक्या' इति पृष्टवान् तदा कलामवर्यः उत्तररूपेण एतत् वचनम् उक्तवान् आसीत् । सः एतस्याः समस्यायाः परिहारमार्गम् अपि सूचितवान् अस्ति – ''प्रबुद्धनागरिकाणां रूपणस्य आवश्यकता वर्तते अद्य । विद्यालयपाठ्यक्रमे मानवीयमौल्यानां योजनेन एतत् साधयितुं शक्यम्'' इति ।

सामाजिकपुनरुत्थाने मानवीयमौल्यजागरणे च धर्मः अत्यन्तं प्रमुखं पात्रं वोढुम् अर्हति इत्यत्र नास्ति संशयः । वर्धमानाः भाविनः पौराः, तन्नाम अद्यतनाः बालकाः सामरस्यशान्तियुक्तं राष्ट्रं निर्मान्तु इति आशास्ते *चन्दमामा* ।

---

*सम्पादकः* – **विश्वम्**

**Visit us at : http://www.chandamama.org**

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-१९

एतस्मिन् मासे प्रश्नाः सन्ति कांश्चित् संन्यासिनः आध्यात्मिकपुरुषान् च अधिकृत्य । उत्तरं ज्ञातुं प्रयतन्ताम् ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. अहमस्मि आदिकाव्यस्य रचयिता, यच्च नितरां सुप्रसिद्धम् अस्ति । मम नाम किम् ?

.......................................................................

2. अहम् आदौ राजा सन् ततः संन्यासी संवृत्तः । मम पुत्र्याः नाम शकुन्तला इति । अहं कः इति ज्ञातं खलु भवद्भिः ?

.......................................................................

3. अहं विन्ध्यपर्वतं नतमस्तकं कृत्वा दक्षिणदेशं गत्वा तत्रैव स्थिरतया वासं कृतवान् । सोऽहं कः स्याम् ?

.......................................................................

4. अहं महाग्रन्थस्य महाभारतस्य रचयिता अस्मि । मया एव वेदाः चतुर्धा विभक्ताः, पुराणानि उपनिषदः च रचिताः । किं स्यात् मम नाम ?

.......................................................................

5. अहं भगवतः ब्रह्मणः पुत्रत्वेन ख्यातः । अहं रामस्य तदनुजानां च गुरुः अस्मि । किं भवद्भिः ज्ञातं - कोऽहमिति ?

.......................................................................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** .......................................................................

.......................................................................

.......................................................................

.......................................................................

भागग्रहीतुः नाम .......................................................................

वयः .................... कक्ष्या ....................................

सङ्केतः .......................................................................

.......................................................................

.......................................................................

पिन् .................... दूरवाणी ....................................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-१९**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काटुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, मे, २००३

***नियमाः -***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

भवद्भ्यः
पारितोषिकं ददाति





# सुशीलस्य स्वप्नः

सुशीलनामकः कश्चन साधुः शिष्येण कौशलनामकेन सह देशे पर्यटनं कुर्वन् कदाचित् कश्चन लघुग्रामं प्रति आगतः । तत्र कस्यचन गृहात् बहिः स्थिते मञ्चे द्वौ अपि सुप्तौ ।

तस्मिन् गृहे रतनः नाम कश्चित् कृषिकः निवसति स्म । उषःकाले महेशनामकः अन्यः कश्चन कृषिकः तत् गृहं प्रति पूर्वं स्वीकृतं हलं प्रत्यर्पयितुम् आगतः । आनीतं हलं द्वारस्य पुरतः संस्थाप्य द्वारताडनं कृतवान् सः ।

रतनः यदा बहिः आगन्तुम् उद्युक्तः तदा महेशः प्रतिगच्छन् - ''हलकार्यं समाप्तम् । अतः तं प्रत्यर्पितवान् अस्मि'' इति वदन् ततः निर्गतः ।

तावति काले सूर्योदयः जातः आसीत् । बहिः आगतः रतनः हलं दृष्टवान् । हलस्य अग्रभागः भग्नः आसीत् ।

एतत् दृष्ट्वा रतनः पत्नीम् आहूय - ''पश्यतु, महेशः कियद्धूर्तः अस्ति इति । हलस्य अग्रभागः भग्नः इति जानन् अपि प्रत्यर्पणसमये किमपि अनुक्त्वा अजानन् इव मौनेन प्रतिनिवृत्तः । उपकारस्मरणरहितः धूर्तः सः । इदानीम् अहं तस्य गृहं गत्वा सम्यक् तं पाठयिष्यामि'' इति वदन् एव खनित्रं गृहीत्वा महेशस्य गृहं प्रति वेगेन प्रस्थितः ।

महेशस्य गृहं गतः सः महेशस्य वृषभ-शकटस्य चक्रं भञ्जितवान् ।

महेशः रतनस्य एतत् कार्यं दृष्ट्वा नितरां कुपितः । सः गृहात् एकं सुदृढं दण्डम् आनीय तेन रतनं शिरसि ताडितवान् ।

एतत् सोढुम् अशक्तः रतनः स्वेन आनीतेन खनित्रेण महेशं शिरसि बलात् ताडितवान् । अनेन ताडनेन व्रणितः सः महेशः विसंज्ञः सन् भूमौ पतितः । शिरसि जातात् व्रणात् रक्तधारा निर्गता ।

रक्तं दृष्ट्वा रतनस्य शरीरे कम्पनम् आरब्धम् । सः भीतः सन् वेगेन गृहं गत्वा

भामहः

द्वारं पिहितवान् ।

क्षणाभ्यन्तरे एषा वार्ता महेशस्य भ्रातृभ्यां ज्ञाता । तौ द्वौ अपि कुठारं, खनित्रं च स्वीकृत्य रतनस्य गृहं प्रति प्रस्थितौ ।

एषा वार्ता रतनस्य मातुलेन, श्यालेन च श्रुता । तौ अपि आयुधं स्वीकृत्य रतनस्य गृहं प्रति प्रस्थितौ । एवमेव बहवः एकैकशः तत्र आगताः । अतः तत्र महान् जनसम्मर्दः अभवत् ।

रतनस्य मातुलश्यालयोः, महेशस्य भ्रात्रोः च मध्ये परस्परं विवादः आरब्धः । परस्परं अवाच्यशब्दैः दूषयन्तः ते अन्ते ताडयितुमपि सन्नद्धाः जाताः ।

एतत् सर्वं मञ्चे शयानः सुशीलः पश्यन् एव आसीत् । तेन चिन्तितम् यत् इदानीं यस्य कस्यचिदपि मारणमपि भवेत् इति । अतः सः मञ्चात् अवतीर्य उभयोः पक्षयोः मध्ये गत्वा स्थितः । एवं झटिति मध्ये आगतं साधुं दृष्ट्वा सर्वे आश्चर्यचकिताः । साधुः सुशीलः मिलितान् सर्वान् सान्त्वयन् गृहे स्थितं रतनम् अनुनयेन बहिः आनीय तं महेशस्य समीपं नीतवान् ।

तावता महेशः किञ्चित् स्वस्थः जातः आसीत् । तस्य शिरसि वैद्येन पट्टिकाबन्धनं कृतम् आसीत् ।

सुशीलः रतनं महेशस्य पार्श्वे उपवेश्य उच्चस्वरेण अवदत् - ''भ्रातरः, अहं कश्चन पथिकः । रात्रौ रतनस्य गृहे स्थिते मञ्चे शयितवान् । शीतलवायोः कारणात् शीघ्रमेव निद्रा प्राप्ता । निद्रायां कश्चन स्वप्नः दृष्टः मया । तस्मिन् स्वप्ने महेशः रतनस्य हलं प्रत्यर्प्य प्रतिनिवृत्तः । ततः रतनः यदा भग्नं



हलं दृष्टवान् तत्क्षणे एव सः महेशम् आहूतवान्। हलः कथं भग्नः इति तं पृष्टवान्। महेशः स्वस्य दोषम् अङ्गीकुर्वन् क्षमां प्रार्थितवान्। अपि च भग्नं हलं समीकृत्य ददामि इति वचनं दत्त्वा हलं स्वीकृत्य लोहकारस्य समीपं प्रस्थितः। एतावति काले स्वप्नस्य भङ्गः अभवत्। अग्रे किम् अभवत् इति मया न ज्ञातम्'' इति।

सुशीलस्य वचनेन रतनेन ज्ञातं यत् मया दोषः कृतः इति। तावता महेशस्य पत्नी उक्तवती - ''मया विस्मृतमेव आसीत् यत् हलाग्रं ह्यः सायम् एव भग्नम् आसीत् इति। ह्यः सायं सेवकः यदा महिषीं दण्डेन ताडयन् आसीत् तदा दण्डस्य प्रहारः हलस्य उपरि पतितः। तेन हलस्य अग्रभागः भग्नः जातः आसीत्'' इति।

महेशः एतत् श्रुत्वा खेदं प्राप्य उक्तवान् - ''क्षाम्यतु भोः। मया प्रमादः कृतः। हलाग्रम् एवं भग्नम् आसीत् इति मया न ज्ञातम् आसीत्'' इति।

रतनः अपि दुःखितः सन् महेशस्य हस्तौ गृहीत्वा क्षमां प्रार्थयन् - ''क्षमा मया एव प्रार्थनीया, न भवता। हलाग्रम् एवं भग्नम् आसीत् इति मया सूचनीयम् आसीत्। तत् अकुर्वता एव मया भवतः शकटस्य चक्रं नाशितम्'' इति अवदत्।

सुशीलः महेशरतनौ सान्त्वनवचनानि कथयन् - ''आवेशः मनुष्यम् अन्धं करोति। कदापि सहसा निर्णयः न स्वीकरणीयः। शान्तेन मनसा चिन्तनीयम्। तदा ज्ञायते यत् सत्यं किम्, असत्यं च किम् इति। मानवजन्म अमूल्यम्। तदपि क्षणिकम्। तादृशे क्षणिक-जीवने मनुष्यः सर्वैः सह प्रीत्या व्यवहरेत्। वस्तुतः मया पूर्वम् उक्तं सर्वम् अपि असत्यम् एव। मया कोऽपि स्वप्नः न दृष्टः। अकस्मात् घटितां एतां घटनां दृष्ट्वा मया चिन्तितं यत् एवं यदि वदेयं तर्हि भवन्तौ स्वदोषं ज्ञातुं प्रभवेताम् इति। अतः एतत् सर्वं मम कल्पनामात्रमेव'' इति।

महेशः रतनः च तस्मै कृतज्ञतां समर्पितवन्तौ। सुशीलः स्वशिष्येण सह तद्दिने तयोः सादरं सत्कारं स्वीकृत्य परेद्यवि पर्यटनाय ततः निर्गतः।





# आशयः अवगन्तव्यः

वागीशः नूतनं भवनं निर्मापितवान् । तत्र चत्वारः प्रकोष्ठाः आसन् । तेषु त्रयः परिवारसदस्यानां वासाय निश्चिताः । एकः प्रकोष्ठः राघवनामकाय युवकाय भाटकरूपेण प्रदत्तः । राघवः निर्धनः । सः कस्मिंश्चित् आपणे कार्यं कुर्वन् महता कष्टेन जीवनं करोति स्म । छिन्नानि वस्त्राणि एव धरति स्म सः । कदाचित् धनाभावतः पाकः न क्रियते स्म तेन । तस्य दुरवस्थां दृष्ट्वा दयां प्राप्तवान् वागीशः चिन्तयति स्म यत् मया एतस्य साहाय्यं करणीयम् इति । किन्तु तस्य मातुलः वदति स्म – 'तथा मास्तु' इति ।

''दयया यदि भवान् साहाय्यं कुर्यात् तर्हि सः गच्छता कालेन भवन्तम् एव अवलम्ब्य जीवेत् । परिश्रमेच्छा एव तस्मिन् विलुप्ता भवेत् । स तु युवकः । एतस्मिन् वयसि तेन परिश्रमः करणीयः । स्वावलम्बिजीवनाय मार्गश्च अन्वेष्टव्यः । अतः इदानीं तस्य साहाय्यं न उचितम्'' इति वदति स्म मातुलः ।

वागीशः मातुलस्य वचनं शिरसा वहति स्म । मातापितृविहीनं तं बाल्यात् एव मातुलः पोषितवान् आसीत् । इदानीं तस्य या उत्तमस्थितिः अस्ति तस्यापि कारणं मातुलः एव । अतः सः मातुलस्य एकम् अपि वचनं न तिरस्करोति स्म ।

कदाचित् तदीयः मातुलः बन्धोः विवाहाय दूरस्थं कञ्चित् ग्रामं गतवान् । तस्मिन् दिने सायं विपणितः प्रत्यागतः वागीशः राघवस्य वेदनामिश्रितं ध्वनिं श्रुत्वा तदीयं प्रकोष्ठं गतवान् ।

तत्र राघवः आच्छादकेन आच्छाद्य कटे सुप्तवान् आसीत् । 'हा हन्त !' 'देव !' इत्यादीनि वचनानि तस्य मुखात् निर्गच्छन्ति स्म । वागीशः तस्य समीपं गत्वा पृष्टवान् – ''किं जातं भवतः ?'' इति ।

''स्वास्थ्यं सम्यक् नास्ति मम । ज्वरः बाधते माम्'' इति क्षीणस्वरेण उक्तवान् राघवः ।

''वैद्यं दृष्ट्वा औषधम् आनीतं किम् ?'' इति पृष्टवान् वागीशः ।

''वैद्यः विना धनं न कमपि परीक्षते । मत्समीपे तु एका वराटिका अपि नास्ति । अतः वैद्यसमीपं न गतं मया । दैवानुग्रहः यदि स्यात् तर्हि ज्वरः स्वयम् अपगच्छेत्'' इति अवदत् राघवः ।

एतस्मै किञ्चित् धनं दातव्यम् इति विचारः वागीशस्य मनसि आगतः । तावता तेन मातुलस्य वचनं स्मृतम् । अतः सः धनदान-विचारं परित्यज्य ततः निर्गतवान् ।

एवमेव त्रीणि दिनानि अतीतानि । चतुर्थे दिने आपणिकः राजनाथः कस्यचित् मुखात् राघवस्य अस्वास्थ्यवार्तां श्रुत्वा तं द्रष्टुं वागीशस्य गृहम् आगतवान् ।

सः राघवस्य प्रकोष्ठं प्रविश्य राघवस्य ललाटे हस्तं स्थापितवान् । ज्वरतापः महान् दृष्टः तेन । अतः सः असन्तोषेण वागीशम् अवदत् - ''एषः महता ज्वरेण पीड्यमानः अस्ति । तथापि एषः किमर्थं वैद्यसमीपं न नीतः ? किम् एतत् उचितम् ?'' इति ।

एतत् श्रुतवतः वागीशस्य मुखं कान्तिहीनं जातम् । स्वस्य दोषः तेन अवगतः । किमर्थं साहाय्यं न कृतम् इति विवृण्वन् सः मातुलेन उक्तं श्रावितवान् ।

तदा राजनाथः तं कोपेन पश्यन् - ''किं मातुलस्य वचनम् एव प्रमाणं भवतः ? ज्वर-तापेन पीड्यमानम् एतं दृष्ट्वा अपि भवान् तूष्णीं स्थितवान् खलु ! धिक् त्वाम् । मातुलस्य वचनं युक्तम् एव । तथापि महति अस्वास्थ्ये प्राप्ते साहाय्यकरणं भवतः कर्तव्यम् आसीत्'' इति उक्त्वा राघवं वैद्यसमीपं नीतवान् ।

ततः अल्पे एव काले दूरग्रामं गतः वागीशस्य मातुलः प्रत्यागतः । राघवं चिकित्सालयं नयन्तं राजनाथं मार्गे दृष्टवान् आसीत् सः । गृहं प्रविष्टः सः वागीशस्य मुखात् प्रवृत्तं सर्वं ज्ञात्वा अवदत् - ''राजनाथेन युक्तम् एव उक्तम् । राघवस्य विकासः भवतु इति उद्देशेन मया उक्तं - साहाय्यं मास्तु इति । तस्य तात्पर्यम् एतत् न यत् आपत्काले अपि साहाय्यं न करणीयम् इति । भवता अनुचितं कृतम् । परिस्थितिम् अवलोक्य निर्णयः करणीयः । शब्दार्थमात्रं न ग्रहीतव्यम्, अपि तु आशयः अवगन्तव्यः'' इति ।

मातुलस्य वचनं श्रुत्वा वागीशः लज्जया शिरः अधः कृतवान् ।





# मायासरोवरः

## १३

*[नदीतीरे स्थितायाः पर्वतीयगुहायाः पुरतः जयशीलसिद्धसाधकाभ्यां मकरकेतुः दृष्टः । मकरकेतुना सह जयशीलस्य बाल्यमित्रं देवशर्मा, सेनापतिपुत्रः मङ्गलवर्मा चापि आस्ताम् । सिद्धसाधकः जलप्रहात् नरवानरं रक्षितवान् । नरवानरः सिद्धसाधकं शरणं गतः सन् करौ योजयित्वा तदीयौ पादौ गृहीतवान् । तदनन्तरम् ....]*

नरवानरः सिद्धसाधकस्य अधीनः जातः इत्येतत् दृष्ट्वा मकरकेतुः अन्ये च आश्चर्यचकिताः । जयशीलः सन्तोषं प्रकटयन् अवदत् – ''दीर्घकालस्य प्रयत्नस्य अनन्तरम् अद्य सिद्धसाधकः स्वनिमित्तम् एकं वाहनं प्राप्तवान् अस्ति । किन्तु एतस्य उपयोगः न सरलः । एतेन नरवानरेण कृपाणजित् पीडितः, सर्पसखः उन्नीय नीतः च । अतः एषः सिद्धसाधकम् अपि पीडयेत् कदाचित्'' इति ।

''मया एव नरवानरात् सर्पसखः रक्षितः । तस्य द्वारा मया ज्ञातं यत् भवान् अत्र अस्ति इति'' इति जयशीलं पश्यन् अवदत् मकरकेतुः ।

जयशीलः मकरकेतुं नखशिखान्तं सकृत् दृष्ट्वा अवदत् – ''भवतः व्रणाः कथम् उपशान्ताः ? एतावता अल्पकालेन एव कथं भवान् स्वस्थः जातः ? सर्वम् एतत् आश्चर्यकरम् अस्ति खलु ?'' इति ।

मकरकेतुः देवशर्माणं दर्शयन् अवदत् – ''अहं पर्वतप्रदेशे अचेतनः सन् पतितः



आसम् । मम प्राणधारणसम्भावना विलुप्ता आसीत् । अत्रान्तरे अयं महानुभावः मां दृष्ट्वा मम चिकित्सां कृत्वा मां रक्षितवान् । सर्वे वैद्यं भगवन्तं वदन्ति । अतः अहम् एतं 'वैद्यदेव'नाम्ना निर्दिशन् अस्मि । एतेन सह मया मायासरोवरं प्रति अपि गत्वा आगतम् । ततः भवन्तम् अन्विष्यन्तः वयम् अत्र आगताः'' इति ।

देवशर्मा अमरावतीनगरे जयशीलस्य बाल्यमित्रम् आसीत् । सः द्यूतासक्तोऽपि आसीत् । बहूनां वर्षाणाम् अनन्तरं द्यूतगृहे तयोः मेलनं जातम् आसीत् सकृत् । देवशर्मणा कदा कस्मात् वैद्यविद्या अधीता इति तु न ज्ञायते स्म जयशीलेन । सः देवशर्माणं प्रणम्य अपृच्छत् – ''वैद्यदेववर्य ! एषः मङ्गलवर्मा किं भवतः शिष्यः ?'' इति ।

तदा देवशर्मा हसन् अवदत् – ''आम् । एषः मम शिष्यः । मत्तः वैद्यविद्याम् अभ्यस्यन् अस्ति एषः । मायासरोवरः गन्तव्यः इति एतस्य महती इच्छा । एवं ननु मङ्गलवर्मन् ?'' इति ।

मङ्गलवर्मा एतत् श्रुत्वा दीर्घं निःश्वसितवान् । ततः स्वस्य काष्ठमयं पादं पश्यन् यावत् सः किमपि वक्तुम् उद्युक्तः तावता आकाशे पक्षिणां पक्षचालनशब्दः श्रुतः । सर्वे शिरः उन्नीय दृष्टवन्तः ।

कैश्चित् हंसैः आकृष्य नीयमानः कश्चन रथः तैः दृष्टः । तं रथं दृष्ट्वा मकरकेतुः, सर्पणखः, सर्पसखः च हस्तौ उन्नीय उच्चस्वरेण उक्तवन्तः – ''मायासरोवरेश्वरः जयतात्'' इति ।

रथे उपविष्टाः तेषाम् एतं जयकारं श्रुतवन्तः । अतः क्षणकालं यावत् रथस्य गमनं स्थगितं जातम् । रथस्थैः जयशीलः अन्ये च लक्षिताः । रथः समीपस्थायां नद्याम् अवतरणाय उद्युक्तं जातम् ।

यदा रथः नद्याम् अवतीर्णः तदा तीरस्थः मकरकेतुः सर्पणखसर्पसखौ च आश्चर्यचकिताः सन्तः परस्परम् उक्तवन्तः – ''अङ्गरक्षकाः एव किमर्थम् अत्र आगताः रथम् आरुह्य ?'' इति । ततः ते त्रयः अपि नदीम् अवतीर्य रथस्य दिशि गतवन्तः ।

नदीतीरे जयशीलः, सिद्धसाधकः, वैद्यदेवनाम्ना ख्यातः देवशर्मा, सेनाधिपतिपुत्रः मङ्गलवर्मा च आसन् । जयशीलः देवशर्माणं नेत्रसङ्केतेन किमपि सूचयित्वा मङ्गलवर्माणम् अवदत् – ''मङ्गलवर्मन् ! आवयोः शाश्वतशत्रुता तु न आसीत् । इदानीं वयं सर्वे सुहृदः ।

भवान् तु मायासरोवरं गत्वा आगतः इति मया श्रुतम् । तत् सत्यं वा न वा इति ज्ञातव्यं मया । किं मायासरोवरपरिसरे कनकाक्षराजस्य पुत्री काञ्चनमाला, पुत्रः काञ्चनवर्मा च भवता दृष्टौ ? कथं स्तः तौ ?'' इति ।

मङ्गलवर्मा स्वस्य काष्ठमयं पादं सकृत् दृष्ट्वा देवशर्माणं पश्यन् अवदत् – ''एतादृशस्य प्रश्नस्य उत्तरदानाय आर्यस्य गुरुदेवस्य अनुज्ञा आवश्यकी'' इति ।

जयशीलः तस्य प्रशंसां कुर्वन् उक्तवान् – ''भवतः गुरुभक्तिः नितरां प्रशंसार्हा अस्ति । मया भवन्मुखतः एव उत्तरं प्राप्तव्यम् इति नास्ति । अतः एतं विषयं भवतः गुरुम् एव पृच्छामि'' इति ।



अत्रान्तरे 'जय महाकाल !' इति वदन् सिद्धसाधकः नरवानरात् अवतीर्णः । ''जयशील ! एते तु जलपक्षिसदृशाः । एतैः सह वार्तालापं कुर्वता भवता समयः व्यर्थीक्रियते । तत्र पश्यतु । सः मकरमुखः तत्सहचराः च पक्षिभिः उह्यमाने रथे उपविश्य पलायनार्थम् उद्युक्ताः सन्ति'' इति अवदत् सः ।

''सिद्धसाधक ! यदि ते पलायनं कर्तुम् इच्छन्ति तर्हि कुर्वन्तु नाम । तान् अवरोद्धुं न शक्ताः वयम् । तेषां सहचरौ उभौ तु अस्माभिः सह स्तः एव'' इति उक्तवान् जयशीलः ।

सिद्धसाधकः मङ्गलवर्माणं देवशर्माणं च निर्निमेषं पश्यन् अवदत् – ''एषः मङ्गलवर्मा तु ज्ञातपूर्वः जनः । एषः अपरः जलमानवः इव न भाति । मायासरोवरं प्रति अस्मान् नेतुं ये समर्थाः ते तु नद्यां सन्ति । यदि ते एव पलायनं कुर्युः तर्हि मायासरोवरं प्रति गमनं प्रायः कष्टकरम् एव स्यात्'' इति ।

एतत् श्रुत्वा देवशर्मा कोपमिश्रितेन स्वरेण अवदत् – ''सिद्धसाधक ! भवान् अल्पं चिन्तयति, अधिकं कोपं प्राप्नोति च । मकरकेतुः उद्देशपूर्वकम् एतं प्रदेशं प्रति किमर्थम् आगतवान् इति किं भवान् जानाति ? भवन्तं भवन्मित्रं च मायासरोवरं प्रति नेतुम् एव । भवद्भ्यां घोरैः जलवृक्षराक्षसैः सह युद्धं करणीयम् अस्ति'' इति ।

''जलराक्षसाः भवन्तु, अन्ये वा, किं तेन ? महाकालस्य साहाय्येन अहं तान् एतेन शूलेन प्रहृत्य दूरे क्षेप्स्यामि । जयशीलसकाशे तु महाकालस्य सेवकेन कालकालेन दत्तः खड्गः अस्ति । अतः न कापि भीतिः आवयोः'' इति अवदत् सिद्धसाधकः ।

जयशीलः अवगतवान् यत् सिद्धसाधक-



देवशर्मणोः कलहः सम्भवेत् इति । देवशर्मा जयशीलस्य बाल्यमित्रम् इति सिद्धसाधकः न जानाति स्म । अतः जयशीलः देवशर्माणम् उक्तवान् – ''वैद्यदेववर्य ! किं भवान् स्वशिष्यं मङ्गलवर्माणं तस्य रथस्य समीपं प्रेषयेत्, येन ते कीदृशं वार्तालापं कुर्वन्तः सन्ति इति ज्ञायेत'' इति ।

जयशीलस्य वचनस्य अन्तरार्थः कः इति देवशर्मा अवगतवान् । अतः सः मङ्गलवर्माणम् अवदत् – ''शिष्य, मङ्गलवर्मन् ! भवान् रथसमीपं गत्वा जानातु यत् रथे मायासरोवरेश्वरः किमर्थं नास्ति, किमर्थं च अङ्गरक्षकाः अत्र आगताः इति । सर्वं ज्ञात्वा आगत्य मां वदतु'' इति ।

मङ्गलवर्मा शरीरम् अवनमय्य देवशर्माणं प्रणम्य जले तरन् रथसमीपं गतवान् । तस्य निर्गमनस्य अनन्तरं जयशीलः देवशर्माणम् अपृच्छत् – ''शर्मन् ! मायासरोवरेश्वरस्य समीपे स्थितौ हिरण्यपुरीयौ राजकुमारी-राजकुमारौ अपि कुशलिनौ ?'' इति ।

''उभौ अपि कुशलिनौ एव । तयोः अपहरणस्य कारणतः हिरण्यपुरराजः यथा दुःखी अस्ति तथैव मायासरोवरेश्वरः अपि आत्मना कृतस्य कार्यस्य निमित्तं खिन्नः अस्ति'' इति अवदत् देवशर्मा ।

तयोः वार्तालापशैलीं दृष्ट्वा सिद्धसाधकः अपृच्छत् – ''जयशील ! किं भवन्तौ परस्परं जानीतः ? एतं विषयं मां किमर्थं न उक्तवान् भवान् ?'' इति ।

तदा जयशीलः – ''उच्चैः सम्भाषणं मा करोतु कृपया'' इति निवेद्य अवदत् – ''सिद्धसाधक ! आवां परस्परं जानीवः इति तु सत्यम् एव । एषः मम बाल्यमित्रम् । आवयोः परस्परपरिचयः पूर्वम् एव आसीत् इति मकरकेतुः कथमपि न जानीयात् । यदि सः जानीयात् तर्हि वयं मायासरोवरेश्वरं बन्धिनं कर्तुं न शक्नुयाम, काञ्चनमालाकाञ्चनवर्मणोः विमोचनम् अपि कष्टाय भवेत्'' इति ।

''युक्तम् उक्तं भवता । एषः अंशः मया चिन्तितः न आसीत् एव । अस्तु, अहम् एतद्विषये अवधानवान् भविष्यामि । एषः हंसैः उह्यमानः रथः किमर्थम् आगतः अत्र ? आगतानां तेषां जनानाम् आगमनोद्देशः कः ? प्रायः देवशर्मवर्यः एतद्विषये अधिकं विवरणं जानीयात्'' इति वदन् सिद्धसाधकः देवशर्माणं मैत्रीपूर्णया दृष्ट्या दृष्टवान् ।

देवशर्मा मन्दहासं प्रकटयन् सिद्धसाधकस्य स्कन्धे हस्तं स्थापयित्वा अवदत् – ''माया-

सरोवरे स्थितं जलवृक्षराक्षसं यदि भवान् मारयेत् तर्हि महाकालतः अपूर्वाः शक्तीः प्राप्नुयात् । सः जलवृक्षराक्षसः भवदाराध्य-देवः महाकालश्च वैरिणौ स्तः'' इति ।

''एवम् ! एवं तर्हि अहं तं गृहीत्वा मम नरवानराय आहाररूपेण अर्पयिष्यामि । नर-वानर ! भवान् तं खादिष्यति खलु ?'' इति पृच्छन् सिद्धसाधकः स्वशूलेन नरवानरं स्कन्धे मृदु प्रहृतवान् ।

तदा नरवानरः उत्थाय नदीतीरे स्थितस्य जलग्रहस्य दिशि गन्तुम् उद्युक्तः । तदा सिद्ध-साधकः तस्य करं गृहीत्वा आकृष्य तदीयं गमनं निवारयन् - ''भोः, तत्र गमनं मास्तु । मकरकेतुः इदानीम् अस्माकं मित्रम् । तस्य स्वामी मायासरोवरेश्वरः अपि अस्माकं मैत्रीम् अपेक्षते । अतः इदानीं जलग्रहः भवतः अग्रजः इव । न पीडनीयः सः'' इति अवदत् ।

सिद्धसाधकस्य एतत् वचनं श्रुत्वा देवशर्मा उच्चैः हसितवान् । ततः स्वस्य वज्रखचितं दण्डम् उन्नीय नदीं दर्शयन् अवदत् - ''माया-सरोवरे कापि अप्रियघटना प्रवृत्ता इति भाति । अन्यथा सरोवरेश्वरस्य एषः रथः एतां नदीं प्रति न आगच्छेत्'' इति ।

देवशर्मा अग्रे अपि किञ्चित् वक्तुं यावत् उद्युक्तः तावता मङ्गलवर्मा मकरकेतुः च तीरम् आगतौ । उभौ अपि नितरां खिन्नौ इव भासेते स्म । तयोः मुखदर्शनात् एव भासते स्म यत् कापि अप्रियघटना प्रवृत्ता अस्ति इति ।

मकरकेतुः रोदनमिश्रितेन स्वरेण - ''वैद्य-देव ! घण्टातः पूर्वं काचित् अहितकरी घटना प्रवृत्ता अस्ति । मायासरोवरेश्वरः यदा हंसरथे उपविश्य जले विहारं कुर्वन् आसीत् तदा जलवृक्षराक्षसः अकस्मात् जलात् उपरि आगत्य सरोवरेश्वरेण सह रथे स्थितां काञ्चन-



मालाम् अपहर्तुं प्रयासम् अकरोत् । तदा रथचालकः अङ्गरक्षकाः च रथरक्षणाय रथम् आकाशं प्रति नीतवन्तः । किन्तु .. किन्तु ..'' इति अर्धोक्त्या वचनं स्थगितवान् । गद्गदकण्ठः सः अग्रे वक्तुं न शक्तवान् । रोदनं रोद्धुं प्रयतमानः आसीत् सः ।

तदा देवशर्मा कातरतया पृष्टवान् - ''रथे उपविष्टयोः सरोवरेश्वरकाञ्चनमालयोः किं कोऽपि अपायः जातः ?'' इति ।

मकरकेतुः कथमपि आत्मानं निगृह्य उक्तवान् - ''आम् । महान् खलु अनर्थः संवृत्तः । यदा हंसरथः आकाशं प्रति अगच्छत् तदा गृध्राणां कश्चन गणः आक्रमणम् अकरोत् । एतस्मात् हंसाः भीताः । ते इतस्ततः उड्डयनम् आरब्धवन्तः । तदा रथस्य गतिः अस्तव्यस्ता जाता । सरोवरेश्वरः, रथचालकः, राजकुमारी च महारण्ये कुत्रचित् पतिताः'' इति ।

एतत् श्रुत्वा जयशीलः सिद्धसाधकः देवशर्मा च आश्चर्येण स्तब्धाः । ''उन्नतप्रदेशात् पतिता राजकुमारी सजीवा न स्यात् कदाचित् । अस्माभिः अद्यावधि यत् कृतं तत्सर्वं व्यर्थं जातं सिद्धसाधक ! सर्वं व्यर्थं जातम् । दत्तं वचनं पालयितुं न शक्ताः वयम्'' इति महता खेदेन वदन् जयशीलः कोषात् खड्गं निष्कास्य दूरे क्षिप्तवान् ।

''पितुः या गतिः जाता तां श्रुत्वा पद्ममुखी आत्मघातं कुर्यात् कदाचित्'' इति वदन् देवशर्मा स्वदण्डेन भूमिं कुट्टितवान् बलात् ।

तदा सिद्धसाधकः - ''किमर्थम् एतावती निराशता ? रथात् पतितौ उभौ अपि वृक्षस्य उपरि जले वा पतितौ स्याताम् अपि । तदा प्राणापायः न जातः स्यादपि । अतः तयोः अन्वेषणाय केषाञ्चित् प्रेषणं वरम् । तं जलराक्षसं गृहीत्वा महाकालाय बलिरूपेण अर्पयाम । मायासरोवरः इतः कियद्दूरे अस्ति ?'' इति अवदत् ।

सिद्धसाधकस्य कथनं यावत् न समाप्तं तावता नद्यां महान् कोलाहलः श्रुतः - ''जलराक्षसः ! जलराक्षसः !!'' इति ।

जयशीलः अन्ये च मुखं परिवर्त्य दृष्टवन्तः । वृकमुखाः केचन राक्षसाः शिलागदां धृत्वा हंसरथस्य वशीकरणाय सर्वाभ्यः दिग्भ्यः आगच्छन्तः आसन् ।

- *(अनुवर्तते)*



# वेताल-कथा

## राजगुरोः मार्गदर्शनम्

वेतालस्य ग्रहणे बद्धकटिः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! मया बहुवारं ज्ञापितं यत् भवता अमूल्यः समयः व्यर्थीक्रियमाणः अस्ति इति । स्वस्य कर्तव्यानि विस्मृत्य भवान् एतस्मिन् श्मशानप्रदेशे व्यर्थतया अटन् अस्ति । एवं करणीयम् इति किं कोऽपि राजगुरुः भवन्तम् आदिष्टवान् अस्ति ? राजानः मन्त्रिणां



कथनम् अपि उपेक्ष्य कदाचित् राजगुरोः वचनं पुरस्कुर्वन्ति । राजगुरवश्च सम्यक् अविचिन्त्य एव किमपि कार्यं कर्तव्यत्वेन विदधति । राज्ञः विक्रमसेनस्य गुरुः अपि एवमेव व्यवहृतवान् आसीत् पूर्वम् । भवतः मार्गायासस्य परिहाराय तदीयां कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

एतदनन्तरं वेतालः कथाम् आरब्धवान् -

''विक्रमसेनः कस्यचित् देशस्य राजा । तस्य विषये जनाः वदन्ति स्म यत् अस्माकं राजा धर्मात्मा, कर्तव्यनिष्ठः, प्रजावत्सलश्च इति । किन्तु राजकुमारस्य शूरसेनस्य भावना अन्या एव आसीत् । मम पिता मां दत्तकपुत्रं मन्यते, मयि अल्पा अपि प्रीतिः नास्ति तस्य इति भावयति स्म सः ।

एतस्य कारणम् अपि किञ्चन आसीत् । राजकुमारः शूरसेनः सर्वशास्त्रपारङ्गतः यद्यपि आसीत् तथापि राजा प्रतिदिनम् अपि तदीये व्यवहारे कमपि दोषं प्रदर्शयन् भवति स्म ।

एतस्मात् क्रुद्धः शूरसेनः कदाचित् पितरम् अवदत् - ''सर्वे कमपि दोषं कुर्वन्ति एव । एवं स्थिते अपि भवान् मयि दोषम् एव पश्यति यत् तत् तु न उचितम्'' इति ।

तदा राजा पुत्रं सान्त्वयन् अवदत् - ''वत्स ! भवान् युवराजः अस्ति । यदि भवति कोऽपि उत्तमगुणः दृष्टः स्यात् तर्हि भवन्तं प्रशंसितुं सन्ति एव बहवः । किन्तु दोषदर्शयितारः विरलाः । अतः अहं भावयामि यत् भवतः परिष्कारार्थं प्रयत्नः मम धर्मः इति । एतस्य तात्पर्यम् एतत् न यत् मया भवतः गुणाः न दृष्टाः इति । मया उक्तम् उचितम् उत न इति आदौ परिशीलयतु । यदि मया दर्शितः दोषः भवति वस्तुतः अपि अस्ति तर्हि तं परिष्कर्तुं प्रयासं करोतु । केवलेन कोपकरणेन न किमपि प्रयोजनम्'' इति ।

एवमेव दिनानि गतानि । अथ कदाचित् राजा विक्रमसेनः अस्वस्थः जातः । राजवैद्याः तं परीक्ष्य उक्तवन्तः यत् पूर्णतया विश्रामः करणीयः भवता इति । अतः राजा पुत्रम् आहूय अवदत् - ''कानिचन दिनानि राज्यभारः वोढव्यः भवता'' इति ।

''अहं तु बहून् दोषान् कुर्वन् भवामि । अतः मादृशेन कृतः राज्यभारनिर्वाहः कथम् उत्तमः भवेत् ? भवान् तादृशं कञ्चित् अन्विष्यतु यश्च जीवने कमपि दोषं न कुर्यात् । तस्मै एव राज्यभारम् अर्पयतु अपि'' इति कटुवचनैः अवदत् शूरसेनः ।

"वत्स ! राज्यभारनिर्वहणसामर्थ्यं भवतः अस्ति एव । भवादृशः समर्थः अन्यः नास्ति कोऽपि । अतः एव एतत् कार्यं भवते अर्पयन् अस्मि । अग्रे कदाचित् वा भवता एतत् कार्यं करणीयम् एव खलु ?" इति वदन् राजा विक्रमसेनः । पुत्रे स्थितानि राजलक्षणानि एकैकशः उपवर्णितवान् ।



पित्रा कृता एषा प्रशंसा शूरसेनस्य सन्तोषाय जाता । सः सन्तोषेण अवदत् - "अहं भवतः आदेशस्य अनुगुणं राज्यभारं निर्वक्ष्यामि । मासद्वयाभ्यन्तरे प्रमाणीकरिष्यामि यत् राज्यभारनिर्वहणे मम सामर्थ्यं कियत् अस्ति इति । यदि तदवसरे मया कोऽपि दोषः क्रियेत तर्हि अहं पुनः कदापि राजपदं न अङ्गीकरिष्यामि" इति । एवं प्रतिज्ञाय सः ततः निर्गतवान् ।

एतत् श्रुत्वा राजा किङ्कर्तव्यताविमूढः जातः । सः राजगुरुम् आनाय्य प्रवृत्तं सर्वं निवेदितवान् । सर्वं श्रुत्वा राजगुरुः उक्तवान् - "शूरसेनस्य चिन्तनं मह्यम् अरोचत । सः दोषरहितं शासनं कर्तुम् इच्छति । अतः भवान् एतस्मिन् काले पुत्रस्य दोषस्य कथनं मा करोतु" इति ।

"गुरुवर्य ! पुत्रेण दोषः क्रियमाणः अस्ति इति ज्ञात्वापि अहं कथं मौनेन तिष्ठेयम् ?" इति अपृच्छत् राजा ।

तदा राजगुरुः हसन् अवदत् - "तरणं ज्ञातव्यं चेत् नदी अवतरणीया एव । तीरे स्थित्वा जलदर्शनेन न किमपि प्रयोजनम् । जले तिष्ठता खलु तरणाभ्यासः क्रियते ? तदवसरे अल्पाः दोषाः भवेयुः । सोढव्याः ते । अतः निर्भयं पुत्रस्य प्रतिज्ञाम् अङ्गीकरोतु । स्वकीयं मनश्च शान्तं करोतु । ध्यानयोगादिषु मनः प्रवर्तयतु । तेन भवतः सहनाशक्तिः वर्धिष्यते" इति ।

राजगुरोः वचनं पालयन् राजा राज्यभारं पुत्राय समर्पितवान् । युवराजः शूरसेनः तु प्रतिदिनं पितरं वदति स्म यत् तत्तद्दिने किं किं प्रवृत्तम् इति । राजा तस्य सामर्थ्यस्य प्रशंसां करोति स्म बहुधा । एवमेव मासद्वयम् अतीतम् । सर्वैः अङ्गीकृतं यत् शूरसेनः समर्थः राजा इति । एतदनन्तरं राजगुरोः सूचनानुगुणं शूरसेनः पट्टाभिषिक्तः जातः ।

ततः वर्षद्वयम् अतीतम् । शूरसेनः अत्युत्तमतया राज्यपालनं कृतवान् आसीत् । सर्वे प्रशंसां कुर्वन्ति स्म । किन्तु शूरसेनः अनुभवति स्म यत् मम व्यवहारे अल्पाल्पाः



दोषाः स्युः एव, किन्तु तान् कोऽपि न ज्ञापयति इति । अतः सः अनुचरान् मन्त्रिणः च प्रार्थितवान् । राज्ञा सह चर्चाम् अपि कृतवान् । तथापि कोऽपि न कथितवान् यत् तस्य व्यवहारे कीदृशः दोषः अस्ति इति ।

एकदा सः पितरम् अवदत् - ''पूर्वं मम विवेकः पक्वः न आसीत् । अतः तदा मया मूर्खतापूर्णा प्रतिज्ञा काऽपि कृता । इदानीं मया स्वदोषः ज्ञातः अस्ति । अतः भवान् यथापूर्वं मम दोषान् ज्ञापयतु कृपया'' इति ।

एतत् श्रुत्वा विक्रमसेनः अवदत् - ''वत्स ! भवति यदा दोषाः दृश्यन्ते स्म तदा मया निस्सङ्कोचं ते ज्ञापिताः एव । इदानीं तु भवति गुणाः एव सन्ति, न तु दोषाः । अतः मया किमपि न उच्यते । अहं भवतः विषये असन्तुष्टः तु नास्मि'' इति ।

पितुः एतेन उत्तरेण शूरसेनः न सन्तुष्टः । सः मातुः समीपं गत्वा उक्तवान् यत् भवती कमपि उपायं वदतु येन पिता यथापूर्वं दोषान् ज्ञापयेत् इति ।

तदा माता उक्तवती - ''सर्वे अपि दोषान् तु कुर्युः एव । इतः पूर्वं भवतः पिता मयि दृष्टान् दोषान् ज्ञापयति स्म, येन अहं लाभं प्राप्नोमि स्म । किन्तु एषु दिनेषु सः मम दोषान् ज्ञापयन् नास्ति । एतस्य कारणं किम् इति न ज्ञायते । अतः यदि भवान् राजगुरुं पश्येत् तर्हि वरं स्यात्'' इति ।

शूरसेनः राजगुरुं दृष्ट्वा स्वसमस्यां निवेदितवान् । किञ्चित् विचिन्त्य राजगुरुः अवदत् - ''यः स्वदोषाणां ज्ञाने समुत्सुकः तस्य जीवनम् उत्तमं भविष्यति । इदानीं भवतः बुद्धिः पर्याप्ततया विकसिता अस्ति । पूर्वं भवतः पिता यदा दोषान् दर्शयति स्म तदा भवान् न सहते स्म । अतः एव अनुचराः मन्त्रिणः चापि भवतः व्यवहारे स्थितान् दोषान् ज्ञापयितुं न उत्सहन्ते । एतस्य एकः एव परिहारः नाम पिता एव काले काले दोषान् यथा ज्ञापयेत् तथा कर्तुं प्रयासः । किन्तु एतत् तु तदा एव सम्भवति यदा च भवान् पितरि कोपं प्रदर्शयितुम् उद्युक्तः भवति'' इति ।

''पिता कथं वा कोपयितुं शक्यः ?'' इति मातरम् अपृच्छत् शूरसेनः ।

तदा माता उक्तवती - ''प्रतिपदं पितुः खण्डनं करोतु । देशे यः कोऽपि अनर्थः यदि दृश्यते तर्हि पूर्वजान् एव तस्य कारणभूतान् वदतु'' इति ।

शूरसेनः मातुः वचनं पालयितुम् उद्युक्तः जातः । राजगुरुः अपि एतम् उपायम् अङ्गीकृतवान् । अतः महाराज्ञी अपि राज्ञः कोपस्य

वर्धने प्रयत्नम् आरब्धवती ।

एवं पुत्रः पत्नी च पदे पदे राजानं कोपयितुं प्रयासं कुरुतः स्म । स्वस्य कोपस्य निग्रहणाय राजा योगशक्तेः अवलम्बनं कृतवान् । तथापि तेन यशस्विता न प्राप्ता । अतः भीतः सन् सः राजगुरुम् अवदत् - "गुरुवर्य ! अहम् अन्तःपुरे एव वसामि । तथापि स्वस्य कोपस्य निग्रहणे असमर्थः जातः अस्मि । मम पुत्रः इदानीम् उत्तमतया शासनभारं निर्वहन् अस्ति । अतः मम तु भाति यत् इतः परं वानप्रस्थाश्रमस्य अवलम्बनम् एव वरम् इति । समीपस्थं किमपि अरण्यं गत्वा तपस्यां कर्तुम् इच्छामि" इति ।

तदा राजगुरुः मन्दहासपूर्वकम् उक्तवान् - "राजन् ! एतावच्छीघ्रं वानप्रस्थस्य स्वीकारः न उचितः । महता श्रमेण स्वस्य क्रोधस्य निग्रहस्य आवश्यकता नास्ति इदानीं भवतः । योगनिष्ठां परित्यज्य यथापूर्वम् अन्तःपुरे सुखेन जीवतु भवान्" इति ।

वेतालः एवं कथां समाप्य अवदत् - "राजन् ! राजगुरुणा दत्ता सूचना किं विलक्षणा इव न भासते ? आदौ सः राजानं सूचितवान् आसीत् यत् क्रोधस्य नियन्त्रणं करणीयं, तदर्थं योगमार्गः अवलम्बनीयः इति । इदानीं सः वदति यत् क्रोधस्य निग्रहस्य न कापि आवश्यकता इति । किम् एतत् असम्बद्धप्रलपनं न ? पितुः विरोधम् आचरतु इति सः युवराजम् उपदिष्टवान् यत् तत् किम् उचितम् ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा मौनेन स्थातुम् अशक्तः राजा अवदत् - "अहङ्कारपूर्णः निष्कारणः क्रोधः मानवस्य हानिं करोति । किन्तु न्यायसम्मतः क्रोधः न कामपि हानिं करोति । कदाचित् सहनाशक्तेः कारणतः अयुक्तांशः अपि युक्ततया भासेत । शूरसेनः इच्छति स्म यत् अन्येषां मुखात् अवगुणान् जानीयाम् इति । एतादृश्यां स्थितौ महाराजः यदि तदीयान् दोषान् काले काले ज्ञापयेत् तर्हि महान् उपकारः कृतः भवेत् । अतः एव राजगुरुः विक्रमसेनम् उक्तवान् यत् सहनाशक्तेः वर्धिका योगनिष्ठा इतः परं न आवश्यकी इति । पितुः अस्थाने सहना या आसीत् तां दूरीकर्तुम् एव शूरसेनः पितरि कुपितः भवति स्म" इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः इत्यतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# यूना राज्ञा कृतः समस्यापरिहारः

काशीनरेशः यदा दिवं गतः तदा तदीयः पुत्रः आसीत् सप्तवर्षीयः। राज्ञः एकमात्रपुत्रः सः। राज्ञः आन्तरङ्गिकः आसीत् चन्द्रः। 'राज्ञः मरणं जातम् इत्यतः इतः परम् अत्र राजप्रासादे मम हितैषी नास्ति कोऽपि' इति चिन्तयन् सः स्वग्रामं गत्वा वासम् आरब्धवान्। तत्र एकं लघु गृहम्, अल्पा कृषिभूमिश्च आसीत् तस्य। कृषिं कुर्वन् तृप्त्या जीवति स्म सः। सः परोपकारी सत्यवक्ता च आसीत्। अतः ग्रामजनाः सर्वे तं विशेषतः इच्छन्ति स्म।

कदाचित् तस्य वृषभौ अस्वस्थौ जातौ। अतः प्रतिवेशिनः जगदीशस्य गृहात् सः वृषभौ आनीतवान्। 'सायङ्कालाभ्यन्तरे प्रत्यर्पयिष्यामि' इति उक्तवान् आसीत् सः। वृषभयोः निमित्तं यत् भाटकं दातव्यम् आसीत् तत् तण्डुलरूपेण आदौ एव दत्तवान् आसीत् अपि।

सायं यदा कार्यं समाप्तं तदा सः वृषभौ जगदीशस्य गृहं नीतवान्। तत्समये जगदीशः शयितवान् आसीत्। तस्य निद्राभङ्गं कर्तुम् अनिच्छन् चन्द्रः वृषभौ गोष्ठे बद्ध्वा प्रत्यागतवान्। तत्समये जगदीशस्य जागरणं जातम् आसीत्। अतः सः चन्द्रस्य सर्वं व्यवहारं दृष्टवान् आसीत्। तथापि सः चन्द्रेण वार्तालापं न कृतवान्।

तस्याम् एव रात्रौ जगदीशस्य वृषभौ केनचित् अपहृतौ। एतत् ज्ञात्वा जगदीशः अचिन्तयत् यत् चौर्यवार्ता राजानं निवेदनीया इति। किन्तु अनन्तरक्षणे कश्चन दुष्टविचारः तस्य मनसि आगतः। चन्द्रात् दण्डशुल्कं प्राप्तव्यम् इति अचिन्तयत् सः। 'वृषभयोः प्रत्यर्पणं मया दृष्टं तु सः न जानाति। अतः वृषभौ न प्रत्यर्पितौ इति उक्त्वा चन्द्रात् धनप्राप्तिः सुकरी। चौर्यं जातम्





इति उक्तं चेत् यावत् राजभटाः वृषभयोः अन्वेषणं न करिष्यन्ति तावत् मया प्रतीक्षणीयम्' इति निर्णीतं तेन ।

अनन्तरदिने यदा चन्द्रः पुनरपि वृषभौ प्रार्थयितुम् आगतः तदा जगदीशः अवदत् - ''भवता तौ न प्रत्यर्पितौ एव । किं तौ विक्रीतौ भवता? इदानीं किमपि अजानन् इव व्यवहरति खलु ?'' इति ।

''मया ह्यः सायं वृषभौ भवतः गोष्ठे बद्धौ एव । तत्समये भवान् निद्रितः आसीत् इत्यतः भवतः निद्राभङ्गं कर्तुम् अनिच्छन् अहं तदा प्रत्यागतः'' इति अवदत् चन्द्रः ।

''अलम् असत्यकथनेन । भवता मत्तः वृषभौ प्राप्तौ आस्ताम् । अतः मत्पुरतः एव तयोः प्रत्यर्पणं भवतः कर्तव्यम् आसीत् । तत् भवता न कृतम् । तस्मात् दोषी भवान् । अतः वृषभौ प्रत्यर्पणीयौ, दण्डः वा दातव्यः'' इति अवदत् जगदीशः ।

ततः विषयः ग्रामप्रमुखसमीपं नीतः । यद्यपि चन्द्रस्य निष्कपटता सर्वैः ज्ञायते स्म, तथापि तेन वृषभौ प्रत्यर्पितौ इत्यत्र प्रमाणं न आसीत् । अतः अयं विवादः बहूनि दिनानि यावत् अनिर्णीतः एव अतिष्ठत् ।

निर्णयं कर्तुम् अशक्नुवन् ग्रामप्रमुखः अवदत् - ''मया श्रुतं यत् अस्माकं राजा वयसा अल्पः चेदपि महाबुद्धिमान् एव इति । अतः भवन्तौ एतं विवादं राजसमीपं नयताम् । सः एव यथायोग्यं निर्णयं कुर्यात्'' इति ।

अनन्तरदिने एव चन्द्रः जगदीशः च राजधानीं प्रति प्रस्थितवन्तौ । किञ्चिद्दूरं गमनानन्तरं ताभ्यां विद्यालयं गच्छन्तः केचन छात्राः दृष्टाः । यदा छात्रैः एतयोः राजधानीं प्रति गमनं ज्ञातं तदा ते उक्तवन्तः - ''राज्ञः बुद्धिमत्ताविषये अस्माभिः बहुधा श्रुतम् । किं भवन्तौ अस्माकं समस्यां राजानं निवेद्य कमपि परिहारोपायं प्रापयितुं शक्नुयाताम् ? वयं प्रतिदिनं प्रातःकाले नियते काले उत्तिष्ठामः स्म । किन्तु गतेभ्यः षड्भ्यः मासेभ्यः अस्माकम् उत्थाने अनियतता जायमाना अस्ति । तेन अस्माकम् अध्ययने विघ्नः जायमानः अस्ति । किम् अस्माकम् एषा समस्या राज्ञा निवारयितुं शक्येत ?'' इति ।

''मूर्खाः भवन्तः । किं राजा एतादृश्याः क्षुल्लकसमस्यायाः परिहारं कुर्यात् ? एतादृशीं समस्यां राजसमीपं यः नयति सः भवति मूर्खः'' इति उपेक्षापूर्वकम् उक्तवान् जगदीशः ।

''बालाः ! अलं चिन्तया । अहं राजानम् उक्त्वा कमपि परिहारोपायं प्राप्स्यामि'' इति वदन् चन्द्रः बालानां सान्त्वनं कृतवान् ।

ततः चन्द्रः जगदीशः च राजधानीं प्राप्य आस्थाने राजानं दृष्टवन्तौ । पितुः आन्तरङ्गिकम् चन्द्रं झटिति अभिज्ञातवान् राजा । सः तं दृष्ट्वा

महान्तं सन्तोषं प्रकटितवान् । ततः सः जगदीशं सूचितवान् - ''विवादविषयम् उपस्थापयतु'' इति ।

यदा जगदीशेन स्वस्य वृषभयोः अदृश्यता-वार्ता श्राविता तदा राजा अवदत् - ''भवान् चन्द्राय इव अन्येभ्यः अपि इतः पूर्वं स्वस्य वृषभौ भाटकाय दत्तवान् आसीत् खलु ?'' इति ।

''आम्'' - उत्तरं दत्तवान् जगदीशः ।

''यदि वृषभस्वीकर्ता सूर्यास्ततः पूर्वं वृषभौ न प्रत्यर्पयति तर्हि भवान् स्वयं तस्य गृहं गत्वा वृषभयोः प्रत्यर्पणं स्मारयति स्म खलु ?''

''आम्, महाराज !''

''यदि भवता यथा उक्तं तथा चन्द्रः वृषभौ न प्रत्यर्पितवान् इत्येव भावयाम । किन्तु भवता एतस्य स्मारणार्थं किमर्थं चन्द्रस्य गृहं प्रति न गतम् ?'' - राजा अपृच्छत् ।

समुचितम् उत्तरं दातुम् अशक्नुवन् जगदीशः इतस्ततः दृष्टवान् । तदा राजा एव पुनः अवदत् - ''भवान् अस्ति असत्यवादी । ग्रामसभायाः पुरतः अपि भवताः असत्यम् एव उक्तम् । एवम् असत्यकथनेन सज्जनः कश्चन पीडितः भवता । वस्तुतस्तु चन्द्रेण कृतं वृषभप्रत्यर्पणं स्वयं दृष्टम् अस्ति भवता । तथापि भवता उच्यते - मया प्रत्यर्पणं न दृष्टम् इति । अतः भवतः नेत्रे स्थिते अपि अप्रयोजके । ते निष्कासनीये'' इति ।

एतत् श्रुत्वा भीतः जगदीशः अश्रूणि स्रावयन् राजानं क्षमां प्रार्थितवान् । चन्द्रस्य कथनस्य अनुगुणं राजा जगदीशं क्षान्तवान् ।

''चन्द्र ! मम पिता भवता श्रद्धया सेवितः । एतस्य प्रतिफलरूपेण अहं भवते किं ददानि ?'' इति चन्द्रम् अपृच्छत् राजा ।

''प्रभो ! भगवतः दयया अहं तृप्त्या जीवामि । अतः मदर्थं किमपि न आवश्यकम् । यदि भवान् मार्गे आवाभ्यां दृष्टानां बालानां समस्यां परिहर्तुं शक्नुयात् तर्हि अहं सन्तुष्टः भवेयम्'' इति उक्त्वा चन्द्रः बालानां कथनं श्रावितवान् ।

''कस्यचित् काकस्य कुक्कुटस्य वा रवं श्रुत्वा प्रायः बालाः नियततया उत्तिष्ठन्ति स्म । इदानीं सः काकः कुक्कुटः वा न स्यात् । अतः बालानां नियतोत्थाने विघ्नः उत्पन्नः स्यात् । ते यदि आत्मबलेन उत्तिष्ठेयुः तर्हि एषा समस्या न भवेत् । एतदर्थं तेभ्यः प्रशिक्षणं दातव्यम्'' इति अवदत् राजा ।

सः बुद्धिमान् राजा आसीत् बोधिसत्त्वः । बुद्धस्य अवतारेषु अन्यतमः आसीत् सः ।





# वेषधारी राजा

धवलः कश्चन निर्धनः । तदीयः ज्येष्ठः पुत्रः कृष्यादिषु साहाय्यं कुर्वन् धन-सम्पादने उपकरोति स्म । किन्तु कनिष्ठः पुत्रः राजराजः ग्रामे व्यर्थतया अटन् दिनानि यापयति स्म ।

धवलः एकदा राजराजम् अवदत् - ''भोः, अस्माभिः प्रीत्या भवतः नाम निश्चितं - 'राजराजः' इति । किन्तु तावता भवान् राजराजः तु न । राजा अपि प्रजानां हिताय परिश्राम्यति । किन्तु भवान् तु व्यर्थतया दिनानि यापयति । किम् एतत् उचितम् ? यदि भवान् अस्माभिः सह स्थातुम् इच्छति तर्हि भवता अपि अग्रजेन इव कार्ये उद्युक्तेन भवितव्यम् । अन्यथा एतस्मिन् गृहे स्थातुं नास्ति भवतः अधिकारः'' इति ।

पितुः एतत् क्रोधपूर्णं वचनं श्रुत्वा स्वयम् अपि क्रुद्धः सन् राजराजः गृहात् निर्गतवान् । 'अहं निर्धनः स्यां नाम, किन्तु मम नाम राजराजः इति न भवेत् इति तु नास्ति' इति मनसि एव वदन् सः राममन्दिरं गतवान् ।

राममन्दिरस्य पुरतः कश्चन संन्यासी उपविष्टः आसीत् । राजराजः तं दृष्ट्वा क्रोधेन एव अवदत् - ''अहम् अस्मि राजराजः । मम पिता वदति यत् राजराजः इति नाम-धारणमात्रेण कोऽपि राजा इव न भवति इति । भवान् अस्ति संन्यासिवेषधारी । संन्यासिवेषस्य धारणमात्रेण किं भवान् संन्यासी भवेत् ?'' इति ।

राजराजः किं वदन् अस्ति इति संन्यासिना झटिति न अवगतम् । सः राज-राजस्य कोपं शमयितुम् इच्छन् अवदत् -

राजकमलः

''वत्स ! राजा जीवति एकया रीत्या, संन्यासी च अपरया रीत्या । जीवने सा रीतिः मुख्या न, अपि तु तृप्तिः एव मुख्या । अतः तृप्तिप्राप्त्यर्थं प्रयासः करणीयः सदापि । निर्धनता अस्ति चेदपि तृप्तिः तु प्राप्तुं शक्या । किन्तु तदर्थं परिश्रमशीलता आवश्यकी स्यात् । कष्टेभ्यः न भेतव्यम् । सन्तोषेण सर्वं सम्मुखीकरणीयम् । एतादृशः व्यवहारः किं शक्यः इति सन्देहः भवेत् भवतः । तं सन्देहं दिनद्वयाभ्यन्तरे निवारयिष्यामि । अहं भवतः हितचिन्तकः अस्मि'' इति ।

एतावत् उक्त्वा संन्यासी ततः प्रस्थितवान् । राजराजः तम् अनुसृतवान् । उभौ अपि कञ्चित् ग्रामं प्राप्तवन्तौ । तत्समये तत्र देवीपूजा प्रचलन्ती आसीत् । देवालयस्य पुरतः केचन वाद्यादिकं वादयन्ति स्म, अन्ये केचन नृत्यन्ति स्म ।

तस्य उत्सवस्य किञ्चन वैशिष्ट्यम् आसीत् । ग्रामीणः कश्चित् तद्दिने राजवेषं धरति स्म, गजस्य उपरि उपविश्य ग्रामे सर्वत्र सञ्चरति स्म च । जनाः अपि तं राजत्वेन पुरस्कुर्वन्ति स्म ।

संन्यासी गजस्य उपरि उपविष्टं तं जनं दर्शयन् अवदत् - ''एषः उत्सवः इतः पूर्वं द्विवारं दृष्टः मया । राजवेषधारिणम् अवधानपूर्वकं पश्यतु तावत् । मानवः स्वजीवने यत् प्राप्तुं न शक्नोति तत् अन्येषां जीवने स्थितं दृष्ट्वा सन्तोषम् अनुभवति । अत्रापि इदमेव प्रचलति । अचिरात् एव किमत्र प्रचलेत् इति परिशीलयाम तावत्'' इति ।

समीपे एव स्थितः कश्चित् संन्यासिनः वचनं शृण्वन् आसीत् । सः विषयं विशदीकर्तुम् इच्छन् संन्यासिनम् उक्तवान् - ''एवं हि श्रूयते यत् राजवेषधारिणः एतस्य पूर्वजः कश्चित् परमदरिद्रः आसीत् इति । राजत्वं





प्राप्तव्यम् इति प्रबला इच्छा आसीत् तस्य । अतः सः एतादृशे कस्मिंश्चित् उत्सवे राजवेषं धृतवान्, स्वजिह्वां लघुना त्रिशूलेन विद्ध्वा देव्याः पुरतः नर्तनम् आरब्धवान् च । ततः सः राजा जातः । एतम् आचारं परिपालयन्तः जनाः अद्यापि कमपि दरिद्रं राजानं कृत्वा सम्मानयन्ति, यश्च त्रिशूलेन स्वजिह्वां विद्ध्वा देव्याः पूजां कुर्यात्'' इति ।

तदा राजराजः अवदत् - ''धनं प्राप्यते चेत् मानवः यत्किमपि कर्तुम् अर्हति । किन्तु जिह्वां त्रिशूलेन विद्ध्वा राजा इव यदेतत् व्यवह्रियते तत् तु नितरां मूर्खतायै'' इति ।

एतत् श्रुत्वा संन्यासी अवदत् - ''स्यान्नाम अस्माकं दृष्ट्या । किन्तु तथा व्यवहरतः तु अन्यः एव विचारः भवितुम् अपि अर्हति । वस्तुस्थितिः का इति तु उत्सवानन्तरं तस्य राजवेषधारिणः गृहं गत्वा जानीयाम'' इति ।

ततः तौ तं वेषधारिणम् अनुसरन्तौ मन्दिरपर्यन्तं गतवन्तौ । मन्दिरं प्राप्तवान् वेषधारी गजात् अवतीर्य वेषादिकम् अपनीय किञ्चित्कालं नृत्यं कृतवान् । ततः मन्दिरस्य अर्चकः राज्ञा प्रेषितानि उपायनानि तस्मै दत्तवान् ।

अनन्तरदिने संन्यासी राजराजश्च वेषधारिणः गृहं गतवन्तौ । लघु कुटीरं तत् । वेषधारिणः नाम आसीत् चम्पकः इति । सः संन्यासिनं राजराजं च आदरपूर्वकं स्वागतीकृतवान् ।

चम्पकः त्रिंशद्वर्षीयः । तस्य एकः पुत्रः, एका पुत्री च । तदीयौ मातापितरौ वृद्धौ । एका अनुजा अपि आसीत् । सा च अनूढा । भगिन्याः विवाहदायित्वं चम्पकस्य उपरि आसीत् । चम्पकः भृत्याद्युद्योगेन जीवति स्म । तदीयौ मातापितरौ अपि अल्पाल्पं

कार्यं कुर्वन्तौ यत्किञ्चित् सम्पादयतः स्मः । चम्पकस्य पत्नी भगिनी च शाकविक्रयणं कुरुतः स्म ।

चम्पकस्य अनुरोधस्य कारणतः राजराजः संन्यासी च तेन सह भोजनं कृतवन्तौ । चम्पकस्य परिवारस्य सदस्याः तस्य दिनस्य आयस्य आधिक्यं यत् अल्पप्रमाणेन जातम् आसीत् तद्विषये वार्तालापं कुर्वन्तौ महता सन्तोषेण आसन् । तेषां पारस्परिकं प्रेम दृष्टवतः राजराजेन स्वगृहं स्मृतम् ।

चम्पकः राजवेषधारणस्य कारणं विस्तरेण उक्तवान् - ''इदानीं यः राजा अस्ति तस्य पूर्वजेषु अन्यतमः अस्मज्जातौ जातः आसीत् इति कथा श्रूयते । मया यथा पूजा कृता आसीत् तथैव तेनापि पूजा कृता आसीत् इति मया श्रुतम् । तस्य परिणामतः सः राजा जातः । राजत्वं प्राप्तव्यम् इति इच्छा मम अपि हृदयस्य कस्मिंश्चित् कोणे अस्ति । त्रिशूलेन जिह्वायाः वेधनस्य अभ्यासाय मया अनेकानि कष्टानि सोढानि । तदा अभासत यत् एतत् परित्यज्य यदि अहं धनसम्पादनाय परिश्रमं कुर्यां तर्हि जीवने आर्थिकोन्नतिः वा भवेत् इति । अतः अहं मम दारिद्र्यस्य निवारणाय विविधानि कार्याणि करोमि । मम गृहजनाः अपि तदर्थं प्रयासं कुर्वन्ति । परिश्रमस्य महत्त्वज्ञापनाय एव अहं त्रिशूलेन जिह्वायाः वेधनं मम पुत्रम् अपि बोधितवान् अस्मि'' इति ।

राजराजः संन्यासिनं चम्पकं च कृतज्ञतां समर्प्य स्वगृहं प्रतिगतवान् । तदा सर्वे उक्तवन्तः - ''अस्मासु कमपि अनुक्त्वा कुत्र गतः आसीत् भवान् ? इतः परम् एवं कदापि न करणीयम्'' इति ।

राजराजः संन्यासिनः चम्पकस्य च वार्ता श्रावयित्वा अवदत् - ''इदानीं मया बहुज्ञातम् अस्ति । धनं विना सुखेन जीवितुं न अर्हति मानवः । धनं सम्पादनीयं चेत् परिश्रमः करणीयः । एतत् सत्यम् इतः पूर्वं मया न ज्ञातम् आसीत् यत् तदर्थं पश्चात्तापम् अनुभवामि अहम्'' इति ।

तस्मात् दिनात् राजराजः अग्रजेन, अन्यैः च सह परिश्रमं कर्तुम् उद्युक्तः जातः ।





# छिद्रोपेतः स्यूतः

कृष्णपुरनामके ग्रामे रामशर्मा नाम कश्चन पण्डितः निवसति स्म । सः गुरुकुले अध्यापयति स्म । तस्य अध्यापनक्रमः अतीव सरलः । सः कदाचिदपि विद्यार्थिनां विषये न कुप्यति स्म, न तान् दण्डयति स्म वा ।

कदाचित् कश्चन कृषिकः दिलीपनामकेन स्वपुत्रेण सह रामशर्मसमीपम् आगतवान् । सः कृषिकः इच्छति स्म यत् मम पुत्रः गुरुकुले अध्ययनं कुर्यात् इति । रामशर्मा लघुपरीक्षाम् आयोज्य दिलीपस्य गुरुकुलप्रवेशम् अनुमतवान् ।

केषाञ्चित् दिनानाम् अनन्तरं रामशर्मा अवगतवान् यत् अध्ययने दिलीपस्य आसक्तिः अधिकतया नास्ति इति । दिलीपस्य व्यवहारः अन्यच्छात्राणां व्यवहारतः भिन्नः भवति स्म । सः गुरोः पाठनं श्रद्धया न श्रृणोति स्म । तदीयानि पुस्तकानि यत्रकुत्रापि पतितानि भवन्ति स्म । व्यायामशालां कटाक्षेण अपि न पश्यति स्म सः । किन्तु भोजनालये तु सर्वादौ एव उपस्थितः भवति स्म भोजनादिनिमित्तम् । आहारम् अपि अधिकतया सेवते स्म सः । अतः वर्षाभ्यन्तरे एव सः स्थूलकायः जातः, किन्तु तस्य बुद्धेः विकासः तु न जातः ।

रामशर्मा दिलीपं बोधितवान् यत् शिक्षणस्य महत्तमं स्थानम् अस्ति जीवने, विद्याविहीनः जनः पशुसमानः भवति लोके इति । किन्तु एतादृशाः उपदेशाः दिलीपे अल्पम् अपि परिवर्तनं न अकुर्वन् । अतः रामशर्मा अवगतवान् यत् दिलीपस्य परिष्कारः न सुलभसाध्यः इति ।

तेषु एव दिनेषु रामपुरनिवासी रामशर्मणः गुरुः गुरुकुलं प्रति आगतवान् । कुशलवार्तालापादीनाम् अनन्तरं रामशर्मा दिलीपस्य वृत्तान्तं श्रावयित्वा अवदत् - "अहम् एतं विद्यावन्तं कर्तुम् असमर्थः जातः अस्मि । मम सर्वे प्रयत्नाः विफलाः सञ्जाताः । अतः मम तु भाति यत् एतस्य प्रतिप्रेषणात् ऋते अन्यः मार्गः नास्ति इति । अहं चिन्ताक्रान्तः

भामहः

अस्मि'' इति ।

तदा तदीयः गुरुः अवदत् - ''वत्स ! अलं निराशतया । एतादृशानां परिष्कारे लघवः अपि उपायाः उपकारकाः भवन्ति कदाचित् । महोपायाः एव सर्वदा कार्यसाधकाः इति तु नास्ति । तदीयाः न्यूनताः ज्ञापयितुम् आदौ प्रयत्नः करणीयः । तदीयव्यवहाराणाम् असहजांशाः अपि क्रमेण ज्ञापनीयाः । ग्रन्थ-बोधनात् यत् असाध्यं तत् साधयितुम् अर्हति आनुभाविकी विद्या'' इति । ततः रामशर्मणा किं करणीयम् इति बोधयित्वा गुरुः स्वग्रामं प्रतिगतवान् ।

अनन्तरदिने रामशर्मा दिलीपम् आहूय - ''ह्यः मम गुरुः अत्र आगतः आसीत् । सः दृष्टः खलु भवता ? सः इतः अनतिदूरे स्थिते रामपुरे निवसति । मम समीपे अविद्यमानाः केचन ग्रन्थाः तस्य सकाशे सन्ति । भवता तत्र गत्वा ते ग्रन्थाः आनेतव्याः । मार्गे भोजनादिकं यत् करणीयं तन्निमित्तम् अपेक्षितं धनम् एतस्मिन् स्यूते अस्ति'' इति उक्त्वा एकं स्यूतं तस्मै दत्तवान् ।

दिलीपः प्रतिवचनं किमपि अनुक्त्वा तं स्यूतं स्कन्धे लम्बयित्वा रामपुरं प्रति प्रस्थित-वान् । मार्गे काचित् विपणिः दृष्टा । आहार-वस्तूनि विक्रीयन्ते स्म तत्र । सः आहारवस्तूनि क्रेतुम् इच्छन् स्यूते हस्तं प्रसारितवान् । किन्तु किम् अस्ति तत्र ? कानिचन छिद्राणि !! धनस्य नाम अपि नास्ति तत्र । एतत् ज्ञातवतः दिलीपस्य मुखं विवर्णं जातम् ।

दिलीपस्य स्थितिं दृष्ट्वा कश्चित् अवदत् - ''भोः, धनं मार्गे कुत्रचित् पतितं स्यात् । अतः प्रतिगत्य अन्वेषणं वरम्'' इति ।



एषा सूचना दिलीपस्य प्रिया न जाता । प्रतिगमनस्य अन्वेषणस्य वा श्रमं सोढुं सिद्धः न आसीत् सः । तदीयं स्थौल्यम् अत्र बाधकम् आसीत् अपि । विलम्बः अपि अपरं बाधकम् आसीत् । अतः दिलीपः खेदम् अनुभवन् विपणितः बहिः आगतः ।

तावता कश्चन भिक्षुकः तस्य पुरतः आगत्य - ''श्रीमन् ! महती बुभुक्षा मम । किमपि दीयताम्'' इति वदन् तस्य पुरतः हस्तौ प्रसारितवान् ।

दिलीपः तम् उक्तवान् यत् भवते दातुं मम समीपे किमपि नास्ति इति । तथापि सः भिक्षुकः तं किञ्चिद्दूरम् अनुसृतवान् । किन्तु अन्ते अपि यदा किमपि न प्राप्तं तदा सः दिलीपं निन्दन् ततः निर्गतवान् ।



दिलीपः अग्रे गतवान् । वृक्षबहुलः कश्चन निर्जनः प्रदेशः प्राप्तः तेन । तत्र श्मश्रुलः स्थूलकायः दण्डहस्तः कश्चित् एतस्य पुरतः आगत्य तीक्ष्णां छुरिकां प्रदर्शयन् उच्चस्वरेण आदिशत् - ''रे ! स्यूते यत् धनम् अस्ति तत् मह्यम् अर्पय'' इति ।

तदा भीत्या कम्पमानः दिलीपः - ''आर्य ! मम स्यूते किमपि नास्ति । सर्वथा रिक्तः सः । सः अस्ति छिद्रोपेतः'' इति वदन् छिद्रोपेतं स्यूतं चोराय दर्शितवान् ।

एतत् दृष्ट्वा चोरः उच्चैः हसन् - ''अहो, कीदृशः भवान् ? छिद्रोपेतं स्यूतं वहति खलु ! कीदृशी बुद्धिमत्ता भवतः !'' इति वदन् ततः निर्गतवान् ।

एतदनन्तरम् अल्पे एव काले दिलीपः रामपुरं प्राप्तवान् । गुरुः तस्यः आगमनम् एव प्रतीक्षमाणः इव स्थितः आसीत् ।

सः दिलीपं स्वागतीकृत्य अवदत् - ''वत्स ! भवान् नितरां श्रान्तः अस्ति इव भाति । अतः आदौ किमपि खादित्वा श्रान्तिं निवारयतु'' इति ।

एतत् श्रुत्वा दिलीपः अश्रूणि स्रावयन् उद्गतं दुःखं कथमपि निगृह्णन् प्रवृत्तं सर्वम् अवदत् - ''एतत्सर्वम् एतस्य छिद्रोपेतस्य स्यूतस्य कारणतः एव प्रवृत्तम्'' इति ।

तदा गुरुः तस्य स्कन्धे हस्तं स्थापयित्वा अवदत् - ''दिलीप ! भवतः गुरुः एतं छिद्रोपेतं स्यूतम् उद्देशपूर्वकम् एव दत्तवान् अस्ति । प्रस्थानात् पूर्वं भवता द्रष्टव्यम् आसीत् यत् स्यूते कियत् धनम् अस्ति इति । तदा तु भवता ज्ञातम् अभविष्यत् यत् स्यूतः छिद्रः अस्ति इति । नाणकानि मार्गे पतितानि स्युः अपि

कदाचित् । भवता प्रतिगत्य यदि अन्विष्टानि स्युः तर्हि तानि प्राप्तानि स्युः'' इति ।

''तथा करणीयम् इति मया अपि चिन्तितम् आसीत् । कश्चित् एवं करणीयम् इति सूचितवान् आसीत् अपि । अधिकसञ्चारस्य अभ्यासः न आसीत्, महती श्रान्तिश्च आसीत् इति कारणतः मया प्रतिगमनविचारः परित्यक्तः'' इति अवदत् दिलीपः ।

''यदि भवान् व्यायामशालां गतवान् स्यात्, परिश्रमस्य अभ्यासं च कृतवान् स्यात्, तर्हि एवं न अभविष्यत् । अग्रे वा परिश्रमजीवनं करणीयं भवता'' इति बोधितवान् गुरुः ।

''अस्तु, तथैव करिष्यामि श्रीमन् !'' इति विनयेन अवदत् दिलीपः शिरः अवनमय्य एव ।

गुरुः पुनः अपि अवदत् - ''वर्षं यावत् गुरुकुले स्थितं चेदपि भवान् विद्यां तु न अधिगतवान् । व्यवहारज्ञानम् अपि भवता नैव सम्पादितम् । स्यूतः छिद्रोपेतः इति यदा ज्ञातं तदा एव भवता सः क्षेपणीयः आसीत् । तदा तु मार्गे सः भिक्षुकः चोरः वा भवन्तं न अपीडयिष्यत्'' इति ।

ततः तं स्वपार्श्वे उपवेश्य पुनः अवदत् - ''अद्य भवान् याः समस्याः सम्मुखीकृतवान् तासां मुख्यं कारणम् अस्ति - भवतः बुद्धिहीनता । गुरोः सकाशात् विद्यां प्राप्य तां सफलां कर्तुं भवता प्रयासः कार्यः । तदा बुद्धिमत्ता विवेकश्च स्वयं वर्धिष्यते । हनूमान् समुद्रलङ्घनाय यदा उद्युक्तः तदा रामेण तस्मै न नौका प्रदत्ता । स्वस्य बुद्धिबलेन तेन मार्गः अन्विष्टः । एतत् एव जीवनसूत्रं नाम'' इति ।

एतस्य सर्वस्य श्रवणात् दिलीपः स्वस्य लोपम् अवगतवान् । गुरुणा दत्तान् ग्रन्थान् गृहीत्वा सः महता आनन्देन गुरुकुलं प्रतिगतवान् । दिलीपे जातं परिवर्तनं झटिति लक्षितं रामशर्मणा ।

गुरुवर्येण सूचितस्य उपायस्य अनुगुणं छिद्रोपेतस्य स्यूतस्य, भिक्षुकस्य, चोरस्य च उपयोगः यः कृतः आसीत् तस्मात् अपेक्षितः परिणामः प्राप्तः आसीत् तेन ।






## कौशेयवस्त्रनिर्मातृणां जीवनयात्रा



यदा भवन्तः कौशेयं स्मरन्ति तदा भारतस्य कः भागः स्मर्यते भवद्भिः ? काञ्चीपुरम्, मैसुरु, मुर्शिदाबाद्, वाराणसी, काश्मीरम् इत्यादिषु अन्यतमः खलु ? वस्तुतस्तु एषः कौशेयोद्यमः गुजराततः समग्रे देशे प्रसृतः । उत्तरभारतस्य मुर्शिदाबाद-वाराणसीप्रभृतिषु स्थानेषु दृश्यमानानां कौशेयवस्त्रनिर्मातृणां पूर्वजाः सौराष्ट्रतः एव आगताः इति ज्ञायते । चतुर्दशे शतके कौशेयनगर्यां यः अग्निकृतः दाहः सम्पन्नः तस्य कारणतः बहवः तस्मात् नगरात् निर्गताः इति प्राचीनग्रन्थाः वदन्ति । एवं निर्गताः ते देशस्य विविधेषु भागेषु वासं कृतवन्तः । अपरः उल्लेखः वदति यत् कौशेयवस्त्रनिर्मातारः चतुर्दशशतकात् पूर्वम् एव, तन्नाम अष्टमे शतके एव, स्वप्रदेशात् अन्यत्र गताः इति ।

## 'घेरावो'प्रभृतयः प्राचीनकालेऽपि



यदा कश्चित् अस्माकम् अपेक्षाः न पूरयति तदा 'धरणा' 'घेरावो' वा क्रियते । तन्नाम स्वस्य इच्छायाः बलात् पूर्तिं साधयितुम् इच्छाम् अपूरयतः गृहस्य पुरतः उपविश्यते । इच्छापूर्तेः अनन्तरम् एव एतत् 'धरणा' समाप्यते । (धरणा, घेरावो इत्यादयः न संस्कृतशब्दाः) एतानि बलात् इच्छपूरणाय क्रियमाणानि तन्त्राणि आधुनिकानि इति यदि भवन्तः चिन्तयेयुः तर्हि तत् भ्रममूलम् एव । भारतीयैः आ बहुभ्यः शतकेभ्यः एतादृशं कृत्यं क्रियमाणम् आसीत् । प्राचीनानि न्यायसम्बद्धानि पुस्तकानि सूचयन्ति यत् 'घेरावो'पद्धतिः प्राचीने काले अपि आसीत् इति । पूर्वं तस्य नाम आसीत् – 'अचरितम्' इति । न केवलं सामान्याः जनाः, अपि तु राजानः, मन्त्रिणः, आस्थानिकाः चापि स्वस्य अपेक्षायाः पूरणाय एतस्य तन्त्रस्य उपयोगं कुर्वन्ति स्म । सोपवासं, निरुपवासं, क्वचित् आमरणोपवासं च एतादृशं कृत्यं क्रियते स्म प्राचीनैः ।

# झारखण्डराज्यीया जानपदकथा

झारखण्डराज्यस्य निर्माणानन्तरं न अधिकः कालः अतीतः । द्विसहस्र-तमवर्षस्य नवम्बरमासस्य २० तमे दिनाङ्के एतस्य रूपणं जातम् । बिहारस्य केचन भागाः, तन्नाम छोटानागपुरपरिसरः, सन्थालपरगणाः च अत्र अन्तर्भवन्ति । झारखण्डस्य विस्तारः ७९,७१४ कि.मी.मितः । अत्रत्या जनसङ्ख्या २६,९०९,४२८ (२००१ तम्याः जन-गणनायाः अनुगुणम्) अस्माकं देशे जनसङ्ख्यादृष्ट्या त्रयोदशं स्थानम् एतस्य राज्यस्य ।

झारखण्डस्य पूर्वभागे अस्ति पश्चिम-वङ्गराज्यम् । पश्चिमभागे छत्तीसगढराज्यं, दक्षिणभागे उत्कलराज्यम्, उत्तरभागे उत्तरप्रदेशः बिहारः च सन्ति । प्रायः एतस्य राज्यस्य सर्वाणि (२१) जनपदानि (जिल्ला) अन्यराज्यीयसीमां स्पृशन्ति एव, लोहर्धागा-जनपदात् ऋते ।

पूर्वं बिहारराज्यस्य 'ग्रीष्मकालस्य राजधानी' इति यत् ख्यातम् आसीत् तत् नगरं राञ्ची इदानीं झारखण्डस्य राजधानी जातम् अस्ति । एतस्मिन् राज्ये उपयुज्यमानासु भाषासु प्रमुखाः - सन्थाली, हिन्दी, उर्दू च । अत्रत्याः अन्याः भाषाः - मुण्डारी, कुरुख्, खोती, नागपुरीया, सद्री, खरिया, पञ्चरग्नीया, हो, माल्टो इत्यादयः ।

## सिङ्गिबोङ्गस्य विशिष्टा सृष्टिः

बहोः कालात् पूर्वं सिङ्गिबोङ्गः सृष्टिकर्ता आसीत् । सः अचिन्तयत् यत् एतत् जगत् स्रष्टव्यम् इति ।

जगत् सृष्टवान् सः मानवान् अपि असृजत् । ततः तेन पशवः, पक्षिणः, वृक्षादयः, अन्ये जीविनः च सृष्टाः ।

एतेन सहैव सह सिङ्गिम् (सूर्यम्) अपि असृजत् । 'सिङ्गि' इति नाम स्वस्य निर्देशार्थं स्वयं निश्चितवान् आसीत् सः । सिङ्गिबोङ्गेन सृष्टेषु अतिप्रमुखा सृष्टिः आसीत् एषा एव ।

सः सर्वेभ्यः औष्ण्यं प्रकाशं च ददाति स्म ।



सस्यानां वर्धने उपकरोति स्म । पुष्पाणां विकसने फलानाम् उत्पत्तौ च सहकरोति स्म । जगति तृणादीनि परिसृजति स्म । सः वृष्टिं कारयति स्म अपि ।

जनानां कृते यावत् आवश्यकं तावत् आहारः प्राप्यते स्म लोके । अतः सर्वे जनाः सन्तोषेण आसन् ।

एतत् सर्वं दृष्ट्वा सिङ्गिबोङ्गः तृप्तिं प्राप्नोति स्म । मम सृष्टिः अत्युत्तमा इति गर्वम् अनुभवति स्म च ।

सिङ्गिः (सूर्यः) आदिनम् आकाशे प्रकाशते स्म । अतः लोके सूर्यास्तः एव न आसीत् । सूर्यास्तस्य अभावतः दिनरात्रिभेदः अपि न आसीत् । यावत् महती श्रान्तिः न भवति तावत् जनाः कार्यं कुर्वन्ति स्म । कार्यारम्भस्य विश्रान्तिस्वीकारस्य वा समयः निश्चितः न आसीत् तत्र । अतः जनाः यदा इच्छा तदा कार्यं कुर्वन्ति स्म, यदा इच्छा तदा निद्रां कुर्वन्ति स्म, यदा बुभुक्षा तदा भोजनं कुर्वन्ति स्म च । कस्यापि नियतः समयः न आसीत् ।

अथ कदाचित् सिङ्गिबोङ्गः भूलोकम् आगतवान् स्वसृष्टेः अवलोकनाय । जनाः सर्वे कृषिक्षेत्रे कार्यं कुर्वन्तः दृष्टाः तेन ।

''कदा अत्र भूमिः कृष्टा ?'' इति अपृच्छत् सः ।

''अद्य'' इति उक्तवान् कश्चित् ।

''एषः कूपः कदा निर्मितः ?''

''अद्य'' इति अवदत् अपरः ।

''एतत् उद्यानं कदा निर्मितम् ?''

''अद्य एव । किमर्थम् एवं पृच्छ्यते ? यद्यत् सम्भवति तत्सर्वम् भवति अद्य एव । अन्यदा कथं भवितुम् अर्हति तत् ?'' इति



आश्चर्येण अपृच्छत् अन्यः ।

सिङ्गिबोङ्गः ततः अग्रे गतवान् । तत्र तेन काचन माता तत्पुत्रः न दृष्टौ ।

''एषः बालः कदा जातः ?'' इति तां मातरम् अपृच्छत् सिङ्गिबोङ्गः ।

''अद्य'' इति अवदत् सा माता ।

''भवत्याः पुत्री ज्येष्ठा इव लक्ष्यते । कदा जाता सा ?'' इति अपृच्छत् सिङ्गिबोङ्गः ।

''अद्य एव । किमर्थं पृच्छ्यते भवता ?'' इति अपृच्छत् सा माता ।

सिङ्गिबोङ्गः अवगतवान् यत् जनाः किमर्थं सर्वस्यापि उत्तरम् 'अद्य' इत्येव वदन्ति इति ।

कालस्य भेदस्य अवगमनाय दिनरात्र्यादि-भेदः न आसीत् इत्यतः जनाः समयभेदं न जानन्ति स्म एव । जनानां दृष्ट्या कालः एकः एव । तस्य नाम 'अद्य....' इति ।

एतत् ज्ञात्वा सिङ्गिबोङ्गः अचिन्तयत् यत् एतद्विषये मया किमपि करणीयम् इति । अतः सः सिङ्गिम् आहूय अवदत् - ''भवता सायङ्काले



अस्तम् एतव्यः, प्रातः उदेतव्यः च । यदा अन्धकारः भवति तदा जनाः कार्यं स्थगयेयुः । अन्धकारदर्शनात् ते जानीयुः यत् निद्रा करणीया इति । यदा भवान् उदेष्यति तदा जनाः जानीयुः यत् अपरस्य दिनस्य आरम्भः अभवत् इति'' इति ।

सिङ्गिः एतत् अङ्गीकृतवान् । यदा सायङ्कालः जातः तदा सः अस्तं गतवान् । तस्मात् समग्रे जगति अन्धकारः प्रसृतः । जनाः न ज्ञातवन्तः यत् जगति किं जातम् इति । अन्धकारः किमर्थं जातः इत्यपि जनैः न ज्ञातम् । अतः ते भीत्या इतस्ततः धावितवन्तः । केचन पतितवन्तः, केचन व्रणिताः जाताः, केचन दिग्भ्रान्ताः जाताः । वृक्षम् आरुह्य क्रीडन्तः स्थिताः बालाः वृक्षात् पतितवन्तः । अन्धकारकारणतः महिलानां हस्ततः पात्राणि पतितानि, भग्नानि च । किं करणीयम् इति कोऽपि न ज्ञातवान् ।

अन्ते तेषां नायकः सर्वान् उद्दिश्य अवदत् – ''भवन्तः शयानाः विश्रान्तिसुखम् अनुभवन्तु । अन्धकारे किमपि कर्तुं न शक्यते । अतः रात्रौ सर्वे निद्रान्तु'' इति ।

एतत् अङ्गीकुर्वन्तः जनाः निद्रां कृतवन्तः । यदा सूर्योदयः जातः, यदा च प्रकाशः दृष्टः तदा जनाः उत्थितवन्तः ।

एतस्मात् जनाः सन्तुष्टाः जाताः । यावत् महती श्रान्तिः तावत् कार्यं करणीयं न आसीत् । अन्धकारः यदा भवति तदा ते विश्रान्त्यर्थं गच्छन्ति स्म । अन्धकारे किमपि द्रष्टुं न शक्यते स्म । अतः तैः रात्रौ काश्चन घण्टाः यावत् निद्रार्थं समयः प्राप्यते स्म एव । अतः एतत् परिवर्तनं तेषां सन्तोषाय जातम् ।

किन्तु अत्रापि काचित् समस्या जागर्ति स्म

## प्राकृतिकी सम्पत्तिः

'झारखण्ड' इत्यस्य पदस्य अर्थः अस्ति 'अरण्यराज्यम्' इति । अधित्यकात्मकम् अस्ति एतत् राज्यम् । समुद्रस्तरात् ९१५ मीटरुन्नते स्थाने अस्ति एतत् । एतत् राज्यं पर्वतावल्या युक्तं, घनारण्यैः आवृतं च । बह्व्यः नद्यः नदीकाः च एतेभ्यः पर्वतेभ्यः खातेभ्यः च उद्गत्य प्रवहन्ति ।

झारखण्डराज्यं खनिजानां भूमिः अस्ति । अत्र असंस्कृतम् अयः, खनिजाङ्गारः, अभ्रकम्, ताम्रम्, सुधाशिलाः, अल्युमिनियम्, बाक्सैट्, क्रोमैट्, सिलिका, सुवर्णम्, संसक्तिमृत्तिका इत्यादयः बाहुल्येन उपलभ्यन्ते । भारते यावत् खनिजाङ्गारः प्राप्यते तस्य ३७.५% भागः अत्रैव प्राप्यते । एवमेव देशस्य ४०% ताम्रम्, २२% अयः, ९०% अभ्रकं च अत्रैव प्राप्यते ।

# वनजातीयानाम् आकरः



एतत् राज्यं विविधानां वनजातीयानाम् आवासभूमिः अस्ति । एतस्य राज्यस्य जनसङ्ख्यायाः ३१% भागः वनजातिजनात्मकः एव । अत्र त्रिंशदधिकाः वनजातयः सन्ति । एताः वनजातयः अन्याभ्यः मुख्यजातिभ्यः भिन्नतया परिलक्ष्यन्ते । तासां परस्परभेदः अपि स्फुटः । अत्रत्याः काश्चन प्रमुखाः वनजातयः – सन्थाल्, ओरान्, माण्डा, खरिया, हो, चेरो, खारवार्, कोर्वा, बिहोरी इत्यादयः ।

एतासां वनजातीनां जनाः कला-करकौशलेषु च सुनिपुणाः । पञ्चसहस्राधिकवर्षेभ्यः पूर्वं शिलासु निर्मिताः कलाकृतयः तेषां नैपुण्यं प्रमाणीकुर्वन्ति । सन्थालीभित्तिचित्राणि, ओरियन्-भित्तिचित्राणि, जाडोपटिया इत्यादयः वनजातीयाः कलाशैल्यः एतस्मिन् राज्ये दृश्यन्ते आधिक्येन ।

एव । सूर्यास्तानन्तरं किमपि न दृश्यते स्म इत्यतः जनाः पौनःपुन्येन पतन्ति स्म । यद्यपि रात्रौ नक्षत्राणि दृश्यन्ते स्म, तथापि तेषां प्रकाशः दर्शनादिनिमित्तम् अपर्याप्तः भवति स्म । अतः एव जनाः गर्ते, बिलेषु वा पतन्ति स्म । वृक्षैः जनैः च घट्टिताः भवन्ति स्म अपि । किं वस्तु कुत्र स्थापितम् इति न ज्ञायते स्म । अतः वस्तूनां भङ्गः, समये अप्राप्तिः च भवति स्म ।

पुनः कदाचित् सिङ्गिबोङ्गः भूलोकम् आगत्य अपृच्छत् – ''इदानीं दिनरात्रिभेदः अस्ति इत्यतः विश्रान्त्यादिनिमित्तम् अवकाशः प्राप्तः खलु ? दिनानि सुखेन गच्छन्ति स्युः खलु ?'' इति ।

''आम् । प्रतिदिनं प्रातः उत्साहवन्तः भवामः वयम् । किन्तु खेदस्य विषयः नाम वयं रात्रौ द्रष्टुं न शक्नुमः इति । अन्धकारस्य कारणतः वयं कदाचित् व्रणिताः भवामः, कदाचिच्च अस्मदीयानि वस्तूनि भग्नानि भवन्ति । किं सिङ्गिः रात्रौ अपि भवितुं न अर्हेत् ? प्रकाशं विना रात्रेः यापनं कष्टाय जातम् अस्ति'' इति अवदन् जनाः ।

''न । सः रात्रौ स्थातुं न अर्हति । सायङ्काले सः अस्तं गच्छेत् एव । तथापि अहं भवतां कृते व्यवस्थां कल्पयिष्यामि । अल्पप्रकाशम् अन्यं स्रक्ष्यामि । मया सृज्यमानः अतीक्ष्णकिरणः भवति । तस्मात् न भवति तापः तस्य । भवतां सर्वे विघ्नाः अपगताः भवेयुः । तस्य नाम भवति 'चन्दुः' इति'' इति अवदत् सिङ्गिबोङ्गः ।

ततः तेन चन्द्रः सृष्टः । चन्द्रः रात्रौ प्रकाशते स्म । तस्य किरणाः तीक्ष्णाः न आसन् । अतः तं पश्यताम् अपि जनानां नेत्रयोः तापः न भवति स्म । सः तेषां निद्रां न नाशयति स्म अपि । एवं जनाः दिने सिङ्गेः साहाय्येन, रात्रौ च चन्दोः प्रकाशेन च उपकारं प्राप्नुवन्ति स्म ।



# वार्ताविशेषः

## द्वादशवर्षीयः बालः गृहे आसीत् एकाकी

रूफस्पुल्लाकः (१२) लण्डन्नगरस्य दक्षिणपश्चिमभागे निवसति । एकदा सः यदा विद्यालयात् प्रत्यागतः तदा तेन गृहे स्वमाता जिल् पार्कर् (५३) न दृष्टा । न तस्मिन् दिने प्रत्यागता सा, न वा अनन्तरदिने, न चापि अग्रिमेषु द्वादशसु दिनेषु । प्रतिदिनं शालातः प्रत्यागतः सः बालकः – 'मम माता अद्य प्रत्यागच्छेत्' इति चिन्तयन् रात्रिं यापयति स्म । जिल्पार्करायाः सहोद्योगिनी स्वसख्याः दीर्घकालिकीम् अनुपस्थितिं दृष्ट्वा आश्चर्यचकिता सती ताम् अन्वेष्टुम् उद्युक्ता । एतस्मात् ज्ञातं यत् मातुः अनुपस्थितौ बालकः प्रतिदिनं स्वनिमित्तम् आहारादिकं स्वयम् एव सज्जीकरोति स्म इति । सः चिन्तितवान् आसीत् यत् मम माता न अदृश्यतां गता इति । अतः सः आरक्षकान् न सूचितवान् एव । ततः स्वगृहसमीपस्थे वासगृहे तदीया माता दृष्टा । पुत्रस्य विषये उपेक्षा दर्शिता इति हेतोः सा दण्डविधानेन दण्डिता जाता ।



## 'प्लवमानं' रैल्यानम्



चीनदेशस्य जनप्रियं नगरम् शाङ्घाय् । अत्रत्यं विमानस्थानकं प्रति ३१ कि.मी.दूरे आर्थिक-जानपदकेन्द्रतः 'माग्लेव्' नामकं रैल्यानं गच्छति १४ निमेषाभ्यन्तरे । एतादृशः महावेगः नास्ति अन्यस्य कस्यचिदपि । चीनदेशीयः प्रीमियर् झू राङ्गूजी, जर्मनीयं तस्मिन् छान्सलर् गरहार्ड् स्क्रोयीडर् च सम्भूय एतत् निर्मितवन्तौ स्तः । चुम्बकीयशक्तेः आधारेण निर्मितस्य रैलमार्गस्य उपरि, रैल्मार्गम् अस्पृशत् एव सञ्चरति एतत् रैल्यानम् । एतत् यत् दूरम् अतिक्रामति तदेव दूरं कार्यानेन अतिक्रमणीयं चेत् घण्टात्मकः कालः आवश्यकः एव, न तु ततोऽपि न्यूनः ।



# स्वकोपः एव स्वस्य वैरी

मदनः कोपशीलः । सर्वे तं स्मारयन्ति स्म – 'कोपः उत्तमः न' इति । परन्तु मदनः एतत् न शृणोति स्म । सर्वे वदन्ति स्म यत् मातापित्रोः अतिप्रेमतः पुत्रः नष्टः इति । अतः मातापितरौ तं तर्जयतः स्म । एतस्मात् मदनस्य कोपशीलता इतोऽपि प्रवृद्धा ।

एकस्मिन् दिने प्रातः उत्थानसमये एव मदनः मातरम् उक्तवान् – ''अम्ब ! महती बुभुक्षा मम । शीघ्रम् अल्पाहारं सज्जीकरोतु । नदीतीरे मित्राणि मम निरीक्षायां सन्ति'' इति ।

तदा माता उक्तवती – ''एतावच्छीघ्रं गमनस्य आवश्यकता का ? उद्याने स्थितानि सस्यानि जलेन सिक्त्वा आगच्छतु । तदा एव अहम् अल्पाहारं ददामि'' इति ।

मातुः एतैः वचनैः नितरां कुपितः मदनः उक्तवान् – ''किम् अल्पाहारार्थम् अपि एतावत् श्रोतव्यम् ? धिक् भवतीम् । अद्य आदिनम् अहं गृहे किमपि न खादामि'' इति ।

साध्वी माता त्वरया दीनस्वरेण उक्तवती – ''किमर्थम् एतावान् कोपः ? भवन्निमित्तं शीघ्रं प्रातराशं सज्जीकरोमि । अग्रे भवन्तं कदापि कार्यं करोतु इति न वदामि'' इति ।

परन्तु मदनः प्रतिज्ञापालनविषये बद्धादरः सन् किमपि न खादितवान् एव । तदा खिन्ना माता पतिं सर्वम् उक्तवती । तस्याः पतिः कठोरतया उक्तवान् – ''भवत्याः कारणतः सः दुष्टः जायमानः अस्ति । सर्वदा क्रीडति सः । किञ्चिदपि कार्यं न करोति । यावत् सस्येभ्यः सः जलं न ददाति तावत् तस्मै आहारं मा ददातु भवती'' इति ।

मदनः पितुः वचनं श्रुतवान् । सः इतोऽपि अधिकं कुपितः । सः झटिति ततः निर्गतवान् एव । यदा सः नदीतीरं प्राप्तवान् तदा तत्र एकः एव सुहृत् आसीत् । स च वृक्षस्य अधः

समीरः



उपविश्य गुडेन सह चणकं खादन् आसीत् ।

तं दृष्ट्वा मदनः पृष्टवान् – "अहमपि बुभुक्षितः । मह्यमपि किञ्चित् ददातु" इति ।

"पश्यतु, एतत् ममैव अपर्याप्तम् । भवते दानस्य का वा कथा ?" इति अवदत् सः ।

तदा मदनः कोपेन उक्तवान् – "गच्छ, गच्छ रे ! अहं त्वया सह सम्भाषणमेव न करोमि" इति ।

तावति काले बहवः सुहृदः तत्र आगताः । ते गृहे एव खादित्वा आगतवन्तः आसन् ।

मदनः सर्वेभ्यः क्रुध्यन् ततः निर्गतवान् । ततः किञ्चिद्दूरे वृक्षस्य अधः खाद्यानि कुर्वती वृद्धा तेन दृष्टा । मदनः तां प्रार्थितवान् – 'मह्यम् अपि कानिचन खाद्यानि ददातु' इति । तदा वृद्धा अवदत् – "धनं दीयते चेदेव दीयन्ते । दानार्थं न सन्ति एतानि" इति ।

एतत् श्रुत्वा नितरां क्रुद्धः मदनः तां वृद्धां ताडयितुम् इष्टवान् । परन्तु यदा सः हस्तम् उन्नीतवान् तदा पार्श्वस्थः शुनकः उच्चैः भषणम् अकरोत् । तदा भयेन धावितवान् मदनः ।

मार्गे कश्चन कृषिकः तं पृष्टवान् – "किमर्थं धाव्यते भवता ?" इति ।

मदनः तं स्वस्य बुभुक्षायाः कथाम् उक्तवान् । कृषिकः सर्वं ज्ञात्वा उक्तवान् – "मम कृषिक्षेत्रे कार्यं क्रियते चेत् अहं भवते पूर्णोदरं भोजनं दास्यामि" इति ।

"अहं ममैव गृहे कार्यं न करोमि । भवत्क्षेत्रे कार्यं किमर्थं क्रियेत मया ? मां कार्यं सूचयतः भवतः कियत् धैर्यम् ?" इति उक्त्वा शिलाखण्डेन तं ताडयित्वा धावितवान् मदनः ।

कृषिकः किञ्चिद्दूरं तम् अनुधाव्य श्रान्तः सन् प्रत्यागतः । एवं मदनः सायम्पर्यन्तं विभिन्नैः सह कलहं कृतवान् । तस्य पिपासा बुभुक्षा च महती जाता । किं कुर्यात् सः ? अन्ते भ्रमन् सः ग्रामात् बहिः स्थितम् आश्रमम् आगतवान् । कृष्णानन्दस्वामिनः आश्रमः सः । तत्र प्रवचनं प्रचलत् आसीत् । दरिद्रेभ्यः अन्नदानं चापि प्रचलति स्म तत्र ।

मदनः कृष्णानन्दस्य समीपं गत्वा स्वकथाम् उक्त्वा भोजनदानं प्रार्थितवान् । कृष्णानन्दः उक्तवान् – "अन्धकारः यदा भवति तदा एव अन्नदानस्य आरम्भः । तावत्पर्यन्तम् अत्र भवान् प्रवचनं शृणोतु" इति ।

मदनः बहु कुपितः । परन्तु अन्यत्र गन्तुं तस्य शक्तिः नासीत् । अतः सः खेदेन एव सर्वैः सह उपविश्य प्रवचनस्य श्रवणे उद्युक्तः जातः । अल्पे एव काले सः बुभुक्षाकारणतः

मूर्च्छां गतः अपि ।

स्वामिनः शिष्याः तत्समीपम् आगत्य जल-सेचनादिभिः उपचारैः तं सचेतनं कृतवन्तः । कृष्णानन्दः प्रीत्या तस्य स्कन्धे हस्तं संस्थाप्य मृदु निपीड्य तं भोजनार्थं प्रेषितवान् ।

शिष्याः तम् आकण्ठं भोजितवन्तः। ततः कृष्णानन्दः मदनम् अपृच्छत् - ''भवतः बुभुक्षा इदानीम् उपशान्ता खलु ?'' इति ।

मदनः सन्तोषेण शिरः चालयन् सम्मतिं सूचितवान् । तदा कृष्णानन्दः पुनः तम् अवदत् - ''भवति स्थितः कोपः एव भवतः शत्रुः । विना कारणं भवान् मात्रे क्रुद्धः । तस्य क्रोधस्य कारणतः आदिनं भोजनं न कृतम् । तस्यैव कारणतः अन्यैः सह अपि एवमेव व्यवहरता भवता बहूनां कोपपात्रता प्राप्ता । क्रोधः एव अनर्थानां मूलम् । एतत् न विस्मर्तव्यम् । तं क्रोधं दूरीकर्तुं प्रयत्यताम्'' इति ।

तदा मदनः स्वदोषम् अङ्गीकुर्वन् - ''मया दोषः कृतः । न जाने, मत्कारणतः मम माता-पितरौ इदानीं कीदृशम् आतङ्कम् अनुभवन्तौ स्तः इति'' इति वदन् अश्रूणि अस्रावयत् ।

कृष्णानन्दः तं सान्त्वयन् - ''वत्स ! अलं रोदनेन । मया इतः पूर्वम् एव भवतः मातापित्रोः कृते वार्ता प्रेषिता - भवान् अत्र सकुशलम् अस्ति इति । अतः तयोः विषये चिन्ता मास्तु । इतः परं वा कोपं परित्यज्य भवान् विवेकी भवतु । अन्यथा एषः कोपः एव भवतः प्रगतिं नाशयिष्यति'' इति उक्त्वा केनचित् शिष्येण सह तं तदीयं गृहं प्रति प्रेषितवान् ।

अनन्तरदिने मदनः मित्रैः सह आगत्य स्वामिनः कृष्णानन्दस्य प्रवचनं श्रुतवान् । तस्मिन् दिने प्रवचनस्य विषयः आसीत् - 'स्वकोपः एव स्वस्य शत्रुः' इति । तस्मिन् प्रवचने सः पूर्वदिने प्रवृत्तां मदनविषयिणीं घटनाम् अपि रसवत्तया वर्णितवान् ।

'उदाहरणानि उदाहरणमात्राणि न । तेषु दैनन्दिनजीवनाय अपेक्षितम् मार्गदर्शनम् अपि निहितं भवति' इत्येतत् अवगतवान् मदनः तस्मात् दिनात् प्रवचनानां श्रवणे आसक्तः जातः । प्रवचने उच्यमानानां कथानां नीतिम् अवगत्य सः तदनुगुणं व्यवहाराय प्रयासम् अपि आरब्धवान् । तस्मात् तस्य जीवने महत् परिवर्तनं जातम् । तद्गृहजनाः इदानीं वदन्ति यत् मदनः उत्तमः बालकः इति ।



# भारतम् अवगम्यताम्

*स्वातन्त्र्यप्राप्त्यनन्तरं भारतदेशेन विविधेषु क्षेत्रेषु प्रमुखं स्थानं वहता बहु साधितम् अस्ति । अस्मात् मासात् आरभ्य वयं विभिन्नविषयकाणां रसप्रश्नानां द्वारा ताः उपलब्धयः काः इति ज्ञातुं प्रयतामहे किञ्चित् ।*

१. भारतस्य अणुशक्त्यायोगस्य नायकत्वम् ऐदम्प्राथम्येन कः निरूढवान् ?

२. दादासाहेब्फाल्केप्रशस्तिदानं कदा आरब्धम् ? तस्याः स्वीकर्तृषु प्रथमः कः ?

३. अण्टार्टिकायात्रासमये भारतीयविज्ञानिनां गणस्य नेतृत्वं कः निरूढवान् ? कदा ते तं प्रदेशं प्राप्तवन्तः ?

४. १९८९ तमे वर्षे कश्चन भारतीयः गणः हिमालयम् आरूढवान् । तस्याः यात्रायाः वैशिष्ट्यं किम् ?

५. १९८९ तमे वर्षे ऐषियन्स्नूकर्प्रशस्तिं विजितवान् भारतीयः कः ?

६. 'पक्षिमानवः' 'सर्पमानवः' इति उपाधिं द्वौ प्रकृतितज्ञौ प्राप्तवन्तौ । तौ कौ ?

७. दशमांशपद्धतिः कदा कार्यान्विता अभवत् ?

८. १९५३ तमे वर्षे भारते जाता काचित् घटना जगतः अवधानस्य आकर्षणम् अकरोत् ? का सा घटना ?

९. पौरुषार्थं दीयमाना अत्युन्नता प्रशस्तिः का ?

१०. भारतस्य कश्चन प्रसिद्धः टेन्नीस्क्रीडापटुः १९८८ तमे वर्षे युनेस्कोतः दीयमानां 'मैन् फेर् प्ले ट्रोफि'प्रशस्तिं प्राप्तवान् । सः क्रीडापटुः कः ?

*(उत्तराणि अग्रिमे मासे)*

## 'मार्च्'मासस्य प्रश्नानाम् उत्तराणि

*१. हनुमान्, परशुरामः, महाबलिः, व्यासः, विभीषणः, कृपः, अश्वत्थामा च ।*

*२. कुबेरः ।*

*३. छाया इति ।*

*४. आम्रफलम् ।*

*५. शन्तनुः भीष्मश्च ।*

*६. सर्वदमनः इति ।*

*७. शिखण्डी ।*

*८. ते सर्वे सूर्यवंशीयाः ।*

*९. 'पृथा' इति कुन्त्याः अपरं नाम । सा पार्थस्य (अर्जुनस्य) माता ।*



# विघ्नेश्वरः

वातापिनगरस्य मध्ये स्थितायाः महाशिलायाः आधारेण विघ्नेश्वरस्य मूर्तिः निर्मातव्या इत्येषा अगस्त्यस्य इच्छा अपूर्णा एव अतिष्ठत् । लोपामुद्रा चित्रकलायां सुनिपुणा आसीत् । सा महाशिलां परिशील्य तदनुगुणतया विघ्नेश्वरस्य एकं रेखाचित्रं सज्जीकृतवती ।

रेखाचित्रं तु सिद्धम् । किन्तु तदनुगुणं महाशिलायां शिघ्नेश्वरमूर्तेः निर्माणाय अपेक्षितः शिल्पी महता प्रयत्नेन अन्विष्टः चेदपि कुत्रापि कोऽपि न लब्धः । अगस्त्यः महाशिलायाः पुरतः उपविश्य लोपामुद्रया रचितं रेखाचित्रं हस्तेन गृहीत्वा सकृत् शिलां, पुनः चित्रं च पश्यन् दिनानि यापयति स्म ।

ये ये शिल्पाचार्याः महाशिलासमीपम् आगताः ते सर्वे – ''एतादृशीं प्रतिमां देवशिल्पी विश्वकर्मा, दानवशिल्पी मयः वा कर्तुम् अर्हति, नान्यः'' इति उक्त्वा प्रतिगताः ।

केचन शिल्पिनः स्वस्य टङ्केन शिलां परीक्ष्य उक्तवन्तः – ''एषा शिला न, अपि तु वज्रपिण्डम् । प्रायः वज्रमयः टङ्कः एव उपयोक्तव्यः भवेत् एतदर्थम् । देवताः यक्षाः वा एतत् कार्यं कर्तुम् अर्हन्ति, न मानवाः'' इति ।

तस्मिन् काले देवशिल्पिनः विश्वकर्मणः पत्नी विश्वकला, या च विष्णोः मानसपुत्री सा, कोपं प्राप्य मातृगृहं गतवती आसीत् । अतः विश्वकर्मणः मनः चञ्चलं जातम् आसीत् । दानवशिल्पिनः मयस्य पत्नी अप्सराः हेमा पतिं परित्यज्य देवलोकं गतवती आसीत् । अतः मयः उन्मत्तः इव लोके भ्रमन् आसीत् । अतः विश्वकर्मा मयः च कार्योपयोगिनौ न आस्तां तस्मिन् काले ।



एतस्मात् मूर्तिनिर्माणकार्यं समस्याग्रस्तम् आसीत् । अन्नपानादिकं परित्यज्य अगस्त्यः तस्याः महाशिलायाः पुरतः उपविश्य विघ्नेश्वरं ध्यायति स्म । कदाचित् सः विघ्नेश्वरं स्मरन् मनसि एव अवदत् – ''गणपतिदेव ! भवता मम इच्छा न पूरिता । मम इच्छायाः पूरणं भवतः एव कार्यम्'' इति ।

कदाचित् अगस्त्यः विघ्नेश्वरस्य ध्यानं कुर्वन् परितः दृष्टिं प्रसारितवान् । तदा तेन स्थूलोदरः कश्चन बालकः स्वसमीपम् आगच्छन् दृष्टः । तस्य बालकस्य हस्ते टङ्कसदृशं वस्तु किमपि आसीत् । सः शिल्पी इव परिलक्ष्यते स्म ।

अगस्त्यः बालस्य हस्ते स्थितं टङ्कसदृशं वस्तु परीक्षादृष्ट्या दृष्टवान् । तत् दन्तनिर्मितम् इव भासते स्म । सः बालशिल्पी अगस्त्य-समीपम् आगत्य अपृच्छत् – ''महर्षे ! महाशिलायाः पुरतः उपविश्य भवान् किमपि चिन्तयति इति भासते । अहं तु कार्यम् अन्विष्यन् एतस्यां दिशि आगतः'' इति ।

बालशिल्पिनः मधुराणि वचनानि अगस्त्ये उत्साहम् अजनयन् । सः उत्साहेन अवदत् – ''शिल्पिवर्य ! एतस्यां शिलायां गणपतेः मूर्तिः निर्मातव्या इति मम अपेक्षा'' इति वदन् हस्तस्थं रेखाचित्रं प्रदर्श्य अपृच्छत् – ''कः भवान् ? किं कार्यं भवतः ?'' इति ।

''मम प्रथमं कार्यं भोजनकरणम् । द्वितीयं च कार्यं मूर्तीनां निर्माणम् । जनाः मां बालशिल्पाचार्यनाम्ना निर्दिशन्ति'' इति स्व-परिचयम् उक्तवान् बालशिल्पाचार्यः ।

तदा अगस्त्यः तं सन्देहेन पश्यन् अपृच्छत् – ''एतस्याः महाशिलायाः आधारेण महा-शिल्पं निर्मातुं समर्थस्य महाशिल्पिनः अन्वेषणं कुर्वन् अस्मि अहम् । भवान् तु बालशिल्पी अस्ति । मम कार्यं तु महत् । किं भवान् एतस्यां महाशिलायां गणपतेः मूर्तिं निर्मातुं शक्नुयात् ? किं तादृशं सामर्थ्यम् अस्ति भवतः ?'' इति ।

तदा बालशिल्पी हसन् – ''अहं बाल-शिल्पी स्यां नाम । तथापि एतत् कार्यं तु मया कर्तुम् असाध्यं सर्वथा न । मम टङ्कः एतादृशानि कार्याणि लीलया करोति'' इति वदन् स्वस्य टङ्कं दर्शितवान् । टङ्कः वज्रमयः इव शोभते स्म ।

एतदनन्तरं सः बालशिल्पी अगस्त्ये पश्यति सति एव, तं टङ्कं महाशिलां लक्ष्यीकृत्य क्षिप्तवान् । टङ्कस्पर्शतः विद्युत् स्फुरिता इव, मेघगर्जनं श्रुतम् इव । तस्मिन् एव समये

महाशिलायाः मध्ये एकं रन्ध्रं निर्मितं जातम् ।

"एतत् अस्ति नाभिस्थानम् । मूर्तिशिल्पे नाभिस्थानस्य महत् प्राधान्यं भवति प्रायः । लम्बोदरस्य प्रतिमा एषा । नाभिनिर्माणं जातम् इत्यतः प्रतिमानिर्माणकार्यम् आरब्धम् इव" इति अवदत् बालशिल्पी । तस्मिन् एव समये शिलातः मालवरागेण गीतम् आरब्धम् - 'लम्बोदर ! लक्ष्मीकर !' इति ।

"एषा अस्ति चुम्बकशिला । मूर्तिनिर्माण-समये इतः प्रचण्डाः किरणाः निर्गमिष्यन्ति । अतः प्रतिमानिर्माणसमाप्तिपर्यन्तं शिलासमीपं न आगन्तव्यं केनापि । तत्समये महाध्वनयः अपि श्रूयन्ते । तत् श्रुतवद्भिः नगरवासिभिः भेतव्यं नास्ति । महर्षिवर्य ! इदानीं भवान् इतः गत्वा निश्चिन्ततया निद्रां करोतु । प्रातः-कालाभ्यन्तरे प्रतिमा सिद्धा भविष्यति" इति अवदत् बालशिल्पी ।

एतत् श्रुत्वा अगस्त्यः आश्चर्यचकितः । तेन तन्द्रा प्राप्ता इव । तथापि आत्मानं निगृह्य सः स्वसमीपे स्थितं रेखाचित्रं बालशिल्पिने दत्तवान् । तदा बालशिल्पी अवदत् - "इतः पूर्वम् एव मया एतत् दृष्टं खलु सकृत् ? अहं तादृशः शिल्पी न, यश्च पुनः पुनः चित्रं दृष्ट्वा मूर्तिनिर्माणं कुर्यात् । चित्रकारं वदतु यत् मूर्तेः निर्माणानन्तरं सा मूलचित्रस्य अनुगुणम् अस्ति वा न वा इति परीक्षणीयम् इति । एतस्य रेखाचित्रस्य निमित्तं भवता कियत् पारिश्रमिकं दत्तम् इति न ज्ञायते । मह्यं कियत् पारिश्रमिकं दीयते भवता ?" इति ।

एतत् श्रुतवतः अगस्त्यस्य मनसि चिन्ता आरब्धा । पत्न्यै दानाय यावत् रक्षितम् आसीत्



तस्मात् ऋते अगस्त्यसमीपे अन्यत् किमपि न आसीत् । अवशिष्टं सर्वं सः जनेभ्यः वितीर्ण-वान् आसीत् । 'एतत् धनं यदि अहं शिल्पिने दद्यां तर्हि लोपामुद्रायै दातुं किं वा शिष्येत' इति चिन्तयन् अगस्त्यः पत्न्याः समीपं गतवान् ।

लोपामुद्रा तं दृष्ट्वा अवदत् - "आर्य ! अहं क्षन्तव्या । अहं पूर्वम् एव जानामि स्म यत् ऋषिपत्न्याः वेषभूषादीनि आचार-व्यवहारादयः च आश्रमजीवनानुगुणम् एव स्युः इति । मध्ये मयि अल्पा विकृतिः उत्पन्ना आसीत् इति भाति । अहम् इदानीम् आश्चर्यम् अनुभवामि यत् श्रेष्ठानि आभरणवस्त्र-धनादीनि आनेतुं मया भवान् किमर्थं प्रेरितः इति । कस्यचित् महतः कार्यस्य सम्पादनाय एव विधिना मम मुखात् तादृशानि वचनानि निस्सारितानि स्युः । इदानीम् अहं न इच्छामि



उत्तमानि वस्त्राणि, न वा अमूल्यानि आभरणानि, नैव वा अपारम् ऐश्वर्यम् । मयि यत् तात्कालिकम् अज्ञानम् आसीत् तदिदानीम् अपगतम् अस्ति'' इति ।

लोपामुद्रायाः वचनानि श्रुत्वा अगस्त्यः नितरां सन्तुष्टः । ''शिल्पी उपस्थितः अस्ति । अतः विघ्नेश्वरमूर्तिः सिद्धा इव । श्वः प्रातः-कालाभ्यन्तरे मूर्तिः सेत्स्यति इति वदति शिल्पी'' इति अवदत् अगस्त्यः ।

''किम् एकरात्र्यभ्यन्तरे शिला मूर्तिरूपतां प्राप्स्यति ? किं सः शिल्पी मानवः, उत देवः ?'' इति आश्चर्येण पृष्टवती लोपामुद्रा ।

''स तु मानवः एव । सः अस्ति कश्चन बालः । तस्मै कियत् पारिश्रमिकं देयम् इति न ज्ञायते मया । तत् कथं दातुं शक्येत इत्यपि चिन्ता अस्ति मम'' इति अवदत् अगस्त्यः ।

''भवता मन्निमित्तं यत् धनं रक्षितं तत् किम् अपर्याप्तं भवेत् तस्मै दानाय ?'' इति पृष्टवती लोपामुद्रा ।

''प्रातःकालः भवतु । तदा कोऽपि उपायः स्फुरेत्'' इति उक्त्वा मनःसमाधानं प्राप्तवान् अगस्त्यः ।

''मया कश्चन अंशः स्मारणीयः अस्ति । श्वः अस्ति भाद्रपदशुक्लचतुर्थी । विनायक-चतुर्थी इति तस्य अपरं नाम । प्रतिमानिर्माण-चिन्तायां निमग्नः भवान् मासतिथ्यादीन् अपि विस्मृतवान् अस्ति'' इति अवदत् लोपामुद्रा ।

''अहो आश्चर्यम् ! विनायकचतुर्थीदिने एव एषा मूर्तिः अपि सिद्धा भविष्यति । एषः तु महतः सौभाग्यस्य विषयः'' इति अवदत् अगस्त्यः ।

तदा लोपामुद्रा उक्तवती - ''सः शिल्पी न बालकः । मानवः अपि न स्यात् सः'' इति ।

पत्न्याः वचनं युक्तम् अस्ति इति अचिन्तयत् अगस्त्यः । अतः रात्रौ तेन निद्रा न प्राप्ता । मूर्तिनिर्माणकार्यं कथं प्रचलति इति द्रष्टव्यम् इति महत् कुतूहलं तस्य । तत् कुतूहलं रोद्धुम् अशक्तः सः शय्यातः उत्थाय शिलासमीपं गतवान् ।

शिलासमीपं गतः सः तत्रत्यं दृश्यं दृष्ट्वा नितराम् आश्चर्यचकितः । शतशः टङ्काः कार्यं कुर्वन्तः दृश्यन्ते ! विविधवर्णीयाः विद्युत्-कान्तयः चतसृषु दिक्षु प्रसरन्ति स्म । घोरः खणखणत्कारः तत्र सर्वत्र प्रसृतः आसीत् । सर्वे टङ्काः गजदन्ताः इव शोभमानाः वज्र-कान्त्याः विलसन्ति स्म । यदेतत् सर्वम् अत्र प्रचलति, यदहं पश्यन् अस्मि तत् स्वप्ने उत वास्तविकजीवने इति निर्णेतुं न शक्तवान्

अगस्त्यः । तत्सर्वं निर्निमेषं पश्यन् एव सः अजानन् एव निद्रावशं गतः । यदा सः जागरितः तदा मृदुप्रहारं दत्त्वा उत्थापयन् बालशिल्पी तस्य पुरतः दृष्टः । पूर्वस्यां दिशि रक्तवर्णता शोभते स्म ।

''महर्षिवर्य ! किम् अत्र भवान् स्वप्नं पश्यन् आसीत् ? योगनिपुणः भवान् कथमेवं निद्रावशं गतः आसीत् ? प्रतिमा तु सिद्धा अस्ति । रेखाचित्रं निर्मितवन्तम् आनीय दर्शयतु । सः परीक्षतां नाम – मूर्तिः चित्रानुरूपा अस्ति वा न वा इति'' इति अवदत् बालशिल्पी ।

तावता मोदकैः पुष्पैः च युक्तां स्थालिकां गृहीत्वा लोपामुद्रा तत्र आगता । अगस्त्यः आश्चर्यचकितः सन् नेत्रे विशालीकृत्य प्रतिमाम् एव निर्निमेषं पश्यन् आसीत् । तदा बालशिल्पी अपृच्छत् – ''आर्य ! मह्यं पारिश्रमिकं कियत् दीयते ?'' इति ।

महर्षिः सङ्कोचयुक्तेन स्वरेण अवदत् – ''शिल्पिवर्य ! भवता प्रतिमा निर्मिता यत् तदर्थं सुमहत् दीयते चेदपि अपर्याप्तम् एव । तथापि भवते दानाय यत् धनं मया रक्षितम् अस्ति तत् स्वीकृत्य आगच्छामि तावत्'' इति ।

तत् श्रुत्वा बालशिल्पी अवदत् – ''आदौ भवान् वदतु यत् रेखाचित्रनिमात्रे भवता कियत् पारिश्रमिकं दत्तम् इति । शिल्पनिर्माणं सुकरं, किन्तु तदाधारभूतस्य रेखाचित्रस्य निर्माणं नितरां कष्टकरम् । तस्य निर्माणाय मेधाशक्तिः कल्पनासामर्थ्यं च विशेषतः अपेक्ष्यते'' इति ।

''बालशिल्पिवर्य ! रेखाचित्रनिमात्रे जनाय मया किमपि न दत्तम् एव । यतः तस्य चित्रस्य



निर्मात्री अस्ति एषा मम पत्नी एव'' इति वदन् अगस्त्यः पार्श्वे स्थितां लोपामुद्रां प्रदर्शितवान् । तत्समये तु लोपामुद्रा मूर्तिदर्शने पूर्णतः निमग्ना आसीत् ।

''महर्षिवर्य ! किमेतत् उच्यते भवता ? मया तु एतादृशस्य चित्रस्य निर्मात्रि तावत् धनं दीयेत येन च एकं महानगरम् एव निर्मातुं शक्येत । एतत् रेखाचित्रं तथा अपूर्वम् अस्ति । अतः एतत् समग्रं धनं तस्यै एव ददातु'' इति अवदत् बालशिल्पी ।

तदा अगस्त्यः अवदत् - ''वस्तुतः तु तस्यै दातुम् एव मया एतत् धनं संरक्षितम् आसीत् । तदेव इदानीं भवते दीयते'' इति ।

''एवम् ! एवं तर्हि एतत् तु स्त्रीधनम् । वस्तुस्थितिं वदता भवता महान् उपकारः कृतः । भवता यदि एतत् न उक्तं स्यात् तर्हि अहं कदाचित् एतत् स्वीकुर्याम् अपि । तदा महान् खलु अनर्थः अभविष्यत् ? स्त्रीधनस्य एकां कणिकाम् अपि अहं स्वीकर्तुं न इच्छामि'' इति उक्त्वा बालशिल्पी लोपामुद्रां पश्यन् अवदत् - ''मातः ! भवती स्वहस्तेन मोदकस्य एकं खण्डं मम मुखे निक्षिपतु । तदेव महत् पारितोषिकं मम । ब्रह्मा शिल्पिनां ललाटे लिखितवान् अस्ति यत् पूर्णोदरम् आहारप्राप्तिः एव कृतस्य कार्यस्य पारिश्रमिकम् इति'' इति ।

एतत् श्रुत्वा लोपामुद्रा मोदकैः पूर्णं पात्रम् एव तस्य पुरतः स्थापितवती । ततः साष्टाङ्गं प्रणम्य शिल्पिनः पादौ गृहीत्वा सा अवदत् - ''देवाधिदेव ! विघ्नेश्वर ! भवतः अनुग्रहतः अस्माकं जन्म सार्थकं जातम्'' इति । एतावत् उक्त्वा सा विघ्नेश्वरस्य स्तुतिम् आरब्धवती । तावता तत्रत्यः शिल्पी अदृश्यतां गतः ।

एतस्मात् अगस्त्यम् आवृत्य स्थिता माया अपगता । सः प्रतिमायाः पुरतः उपविश्य - ''विघ्नेश्वर ! मम महत् योगबलम् अस्ति इति चिन्तयन् अहं महान्तं गर्वं वहामि स्म अद्यावधि । किन्तु अद्य अहं परमाज्ञानी इव अभवम् । महान्तः अपि पुरुषाः भवतः मायाम् अतिक्रान्तुं न समर्थाः'' इति वदन् कर्णौ गृहीत्वा दशवारम् उत्थानोपवेशनं कृतवान् । तस्मिन् समये मूर्तेः उदरभागतः हंसध्वनिरागेण कीर्तनं श्रूयते स्म - 'वातापिगणपतिं भजे' इति ।



# मधुकरस्य भाग्यम्



कस्मिंश्चित् ग्रामे कश्चन सत्पुरुषः आसीत् । सः दानशूरः इति ख्यातः । मधुकरनामकः तस्य सत्पुरुषस्य सेवकः । सः बहुभ्यः वर्षेभ्यः तस्मिन् गृहे वसति स्म । कदाचित् सः सत्पुरुषः मधुकरेण सह विपणिं गतः । तत्र चन्दनकाष्ठेन निर्मितः कश्चन रथः दृष्टः । रथः अश्वद्वयेन युक्तः आसीत् । तस्मिन् रथे स्थितां मधुकरस्य आसक्तिं दृष्ट्वा सः सत्पुरुषः तं रथं क्रीत्वा मधुकराय उपायनत्वेन दत्तवान् ।

कदाचित् तस्य सत्पुरुषस्य गृहं प्रति आगतः कश्चन अतिथिः मधुकरस्य प्रकोष्ठे स्थितं तं रथं दृष्ट्वा आश्चर्यान्वितः जातः ।

''अहो कियत् सुन्दरम् अस्ति एतत् ! एतादृशः रथः कुत्र क्रेतुं शक्यः ?'' इति सः पृष्टवान् ।

तदा सः सत्पुरुषः झटिति - ''एतत् भवान् एव स्वीकरोतु'' इति वदन् तं चन्दनकाष्ठमयं रथं मधुकरहस्ततः एव तस्मै अतिथये दापितवान् । मधुकरेण तु स्वामिनः आज्ञा पालिता । किन्तु तस्य मनः खिन्नम् अभवत् । एतत् ज्ञात्वा सः सत्पुरुषः अतिथेः गमनस्य अनन्तरं मधुकरम् उक्तवान् - ''अहं पूर्वं महता प्रयत्नेन जीवने औन्नत्यं प्राप्तवान् । भवन्तं 'मम अनुजः' इति अहं सर्वान् उक्तवान् अस्मि । अतः त्वयि अपि मत्सदृशाः दानगुणाः सन्ति इति निरूपयितुं मया एवं कृतम्'' इति ।

तस्य वचनेन मधुकरस्य मनः किञ्चिदिव शान्तम् अभवत् । कतिपयेषु दिनेषु गतेषु अतिथिरूपेण यः पूर्वम् आगतः आसीत् स एव स्वपुत्र्या सह आगत्य उक्तवान् - ''मम पुत्र्याः विवाहः भवतः अनुजेन सह कारयितुम् इच्छामि'' इति ।

अनेन मधुकरः चन्दनरथेन सह चन्दनसदृशीं पत्नीमपि प्राप्तवान् ।



# धनिकस्य उपायः

कण्टकनामकः कश्चन लुण्ठाकः पूर्वम् आसीत् । सः यमुनापुरीराज्ये प्रायः सर्वेषु गृहेषु लुण्ठनं कृत्वा तेषां दारिद्र्यस्य कारणीभूतः आसीत् । तस्य नामश्रवणेनैव जनाः भीत्या कम्पन्ते स्म ।

कण्टकः बहुचतुरः आसीत् । कदापि सः आरक्षकाणां दृष्टिपथे न पतितः । सर्वान् वञ्चयन् लुण्ठनकार्यं करोति स्म सः । अतः राजा घोषणां कारितवान् यत् यः कण्ठकं ग्रहीष्यति तस्मै लक्षं सुवर्णनाणकानि दास्यन्ते इति ।

यमुनापुर्यां विश्वदत्तः नाम कश्चन वणिक् आसीत् । सः कदापि वाणिज्ये वञ्चनां न कृतवान् आसीत् । सर्वैः सह यथायोग्यं व्यवहरति स्म । अतः एव जनाः तं वदन्ति स्म यत् विश्वदत्तः सदाचारी इति ।

कदाचित् कश्चन साधुः विश्वदत्तस्य गृहम् आगतः । सः विश्वदत्तम् अवदत् -''अहं काशीतः रामेश्वरं गच्छन् अस्मि'' इति ।

एतत् श्रुत्वा विश्वदत्तः - ''मया क्रियमाणम् आतिथ्यं स्वीकृत्य इतः अग्रे गच्छतु'' इति विनयेन प्रार्थितवान् । साधुः तस्य प्रार्थनाम् अङ्गीकृतवान् ।

रात्रौ सर्वे निद्रिताः आसन् । मध्यरात्रे कश्चन शब्दः जातः । एतस्मात् विश्वदत्तस्य निद्राभङ्गः अभवत् । उत्थितः सः वातायनद्वारा तत्रत्यां स्थितिं पश्यन् स्तब्धः अभवत् । यतः तस्मिन् प्रकोष्ठे साधुः स्वस्य साधुवेषं निष्कास्य धनिकस्य धनाभरणकपाटिकाम् उद्घाटयितुं प्रयत्नं कुर्वन् आसीत् ।

तस्य व्यवहारं दृष्ट्वा विश्वदत्तः ज्ञातवान् यत् एषः न साधुः, अपि तु चोरः इति । 'एषः एव लुण्ठाकः कण्टकः' इत्यपि अभिज्ञातं तेन । एतस्मात् सः नितरां भीतः । तेन एतावत्-पर्यन्तं कोऽपि चोरः न दृष्टः आसीत् ।

'इदानीम् आगतः चोरः तु न सामान्यः । एषः चौर्यसमये धनेन सह जनानां प्राणान् अपि नयति । एतादृशस्य ग्रहणं कथं शक्येत'

इति चिन्तने मग्नः विश्वदत्तः । शक्त्या असाध्यं कर्म बुद्ध्या साधयितुं शक्यम् इति अन्ते तेन निश्चितम् ।

प्रकोष्ठे विश्वदत्तस्य पत्नी सुप्ता आसीत् । एषः अपि किञ्चित्कालं निद्रितः इव अभिनयन् झटिति उत्थाय उच्चस्वरेण कथनम् आरब्धवान् – ''कथं निश्चिन्तं निद्राति भवती ? उत्तिष्ठतु, मम वचनं सावधानं शृणोतु'' इति ।

विश्वदत्तस्य पत्नी निद्रातः कष्टेन उत्थाय असन्तोषेण पृष्टवती – ''किन्निमित्तम् एतादृशी त्वरा भवतः ? किमर्थं मम अपि निद्रा नाशिता ?'' इति ।

''स्वप्ने अस्माकं कुलगुरुः सच्चिदानन्दस्वामी मया दृष्टः'' इति उक्तवान् विश्वदत्तः ।

''स्वामी स्वप्ने आगतः चेत् कोऽपि विशेषः स्यात् । कथयतु शीघ्रम् । स्वामिना कः आदेशः दत्तः ?'' इति पत्नी सोत्साहं पृष्टवती पतिम् ।

''शृणोतु । आ बहुभ्यः वर्षेभ्यः पुत्र्याः विवाहार्थं वरान्वेषणं प्रचलदेव अस्ति । किन्तु प्रयोजनं नास्ति खलु । स्वामिना उक्तं यत् परश्वः शुक्रवासरे दुर्गादेव्याः मन्दिरस्य समीपे स्थितस्य अश्वत्थवृक्षस्य अधः कश्चन भक्तः ध्यानमग्नः सन् उपविष्टः भविष्यति, तस्मै स्वपुत्रीं ददातु भवान्, अनेन विवाहेन भवतः पुत्र्याः जन्म सफलं भविष्यति इति । एतावत् उक्त्वा सः अदृश्यतां गतः'' इति उक्तवान् विश्वदत्तः ।

''मधुरवचनानि श्रावितानि भवता । सर्वं स्वामिनः आशीर्वादस्य फलम् । अस्तु, तेन यथा आदिश्यते तथैव करवाम'' इति पत्नी उत्साहभरितेन स्वरेण उक्तवती ।

कण्टकः अनयोः पतिपत्न्योः सम्भाषणं श्रुतवान् । सः नितरां सन्तुष्टः । तेन पूर्वमेव ज्ञातम् आसीत् यत् विश्वदत्तः बहुधनवान्,



साधुसंन्यासिनां विषये तस्य महान् आदरः इति । अत एव कण्टकः साधुवेषं धृत्वा एव अत्र आगतः आसीत् ।

कण्टकः इदानीं पुनः काषायवस्त्रं धृतवान् । ततः तेन चिन्तितम् - 'इदानीम् अहं धनम् आभरणं वा चोरयेयम् । किन्तु यदि दुर्गादेव्याः मन्दिरसमीपे भक्तः भूत्वा उपवेक्ष्यामि तर्हि विश्वदत्तस्य समग्रायाः सम्पत्तेः अहमेव स्वामी भविष्यामि । अपि च तस्य पुत्री अपि मदधीना भविष्यति' इति ।

कण्टकः एवं चिन्तयन् चोरितानि धन-कनकानि पूर्ववत् कपाटिकायां संस्थाप्य विना वचनं ततः प्रस्थितः ।

विश्वदत्तेन चिन्तितं यत् मया कृतः उपायः निश्चयेन साफल्यं भजते इति । सः रात्रौ आरक्षकाधिकारिणं दृष्ट्वा सर्वं विषयम् उक्तवान् ।

शुक्रवासरे सः पत्न्या सह दुर्गादेव्याः मन्दिरं गतवान् । तत्र वृक्षस्य अधः कण्टकः उपविश्य ध्यानमग्नः आसीत् । तेन शुभ्रं श्वेतवस्त्रं धृत्वा ललाटे तिलकमपि धृतम् आसीत् । तेन वेषेण स्थितस्य तस्य अभिज्ञानं नितरां कष्टकरम् आसीत् ।

विश्वदत्तः मनसि आनन्दम् अनुभवन् तस्य समीपं गत्वा पृष्टवान् - ''पुत्र ! भवान् कः ? कुत्रत्यः ? भवतः भक्तिभावं पश्यामः चेत् भासते यत् भवान् सामान्यः न स्यात् इति । कुतः आगतं भवता ?'' इति ।

तदा कण्टकः अञ्जलिं बद्ध्वा देवीं नमस्कृत्य उक्तवान् - ''अहं समीपग्रामस्थः । आ जन्मनः देव्याः उपासकः अहम् । मम एका एव इच्छा यत् अस्य अश्वत्थवृक्षस्य अधः उपविश्य ध्याने मग्नः सन् देव्याः कृपां प्राप्नुयाम् इति'' इति ।

कण्टकस्य स्वरेण विश्वदत्तः ज्ञातवान् यत् अयमेव सः चोरः, यश्च साधुरूपेण आगतः आसीत् इति ।अतः सः नेत्रसङ्केतं कृतवान् । तत्रैव रहस्यरूपेण स्थिताः केचन सैनिकाः झटिति आगत्य तं कण्टकं बद्धवन्तः । एवं भवेत् इति सन्देहः लेशमात्रेणापि न आसीत् कण्टकस्य ।

तस्य देशस्य राजा विश्वदत्तस्य चातुर्यं बहुधा प्रशंसन् घोषणानुसारं लक्षं सुवर्णनाणकानि तस्मै दत्तवान् ।





# शशाङ्कस्य कौशलम्

चित्रसेनः चित्रदुर्गस्य महाराजः । सः प्रजाः पुत्रान् इव प्रीत्या परिपालयति स्म । अनेन सः सर्वेषाम् आदर्शभूतः आसीत् । शस्त्रयुक्तायाः सेनायाः, सेनाधिपतेः मार्तण्डस्य रणनीतेः च कारणतः राज्ये शत्रुभ्यः भयमपि नासीत् । मन्त्री चन्द्रहासः महान् बुद्धिमान् मेधावी च । तस्य सूचनानुगुणमेव राजा राज्यस्य परिपालनं करोति स्म । अतः परितः स्थितानां देशानां राजाभिः सह मधुरः सम्बन्धः आसीत् चित्रसेनस्य ।

मृगयायां महती प्रीतिः महाराजस्य । अवसरे प्राप्ते अरण्यं गन्तुं तस्य मनः उत्सुकं भवति स्म । जनाः सर्वे राज्ञः गुणवर्णने कदापि अलसाः न आसन् ।

कतिपयेषु वर्षेषु गतेषु महाराजस्य चित्रसेनस्य मनसि विचारः उत्पन्नः यत् युवराजः कनकसेनः महाराजपदव्यां नियुक्तः भवतु इति । दिनेषु अतीतेषु स च विचारः दृढः जातः । अतः शुभे मुहूर्ते कनकसेनः राज्ये अभिषिक्तः जातः ।

चित्रदुर्गराज्यं समग्ररूपेण सुव्यवस्थितम् आसीत् । तेन जनाः अपि विना क्लेशं स्वजीवनं सुखेन शान्त्या च यापयन्ति स्म । पितुः निर्णयः योग्यः एव इत्यंशं राज्ये अभिषिक्तः कनकसेनः स्वस्य व्यवहारेण समर्थितवान् ।

सुखिन्यः प्रजाः, सम्पदा समृद्धा भूमिः, शत्रुपीडारहितं राज्यम् इत्येते अंशाः राज्ञि कनकसेने कलायां साहित्ये च आसक्तिं वर्धितवन्तः । तस्य विशेषतया चित्रलेखने महती अभिरुचिः आसीत् । राजभवने शारदाकलानिलयः आसीत् । तत्र मनोहराणि



नैपुण्यद्योतकानि शिल्पानि आसन् । तानि शिल्पानि कनकसेनः बाल्यात् आरभ्य पश्यन् एव अस्ति । तस्मिन् कलानिलये चित्रदुर्गं पालितवतां पूर्वजानां षण्णां राज्ञां शिल्पानि आसन् । कनकसेनस्य पिता चित्रसेनः सप्तमः । पूर्वजानां शिल्पैः सह स्वपितुः चित्रसेनस्य शिल्पमपि स्थापनीयम् इति इच्छा आसीत् कनकसेनस्य ।

कदाचित् सः आस्थानचित्रकारान् आहूय तान् स्वाभिप्रायम् उक्तवान् । समग्रे राज्ये घोषणाम् अपि कारितवान् यत् यः महाराजस्य चित्रसेनस्य चित्रं बृहद्रूपेण चित्रयिष्यति सः पुरस्कारार्हः भविष्यति इति ।

अनया घोषणया उत्सुकाः अनेके चित्रकाराः महाराजस्य चित्रसेनस्य चित्रं विलिख्य कनकसेनसमीपम् आनीतवन्तः । किन्तु तेषु एकमपि चित्रं मनोहारि न आसीत् ।

यतः महाराजस्य वामनेत्रं किञ्चित् दोषयुक्तम् आसीत् । तथैव चित्रकारैः अपि चित्रितम् आसीत् । अतः कनकसेनः अवदत् - ''नयनं सर्वेन्द्रियाणां प्रधानमिति उक्तिरस्ति । तस्मिन्नेव भवद्भिः दोषः दर्शितः । यदि एतत् चित्रं कलानिलये स्थापयेयं तर्हि अनन्तर-कालीनाः जनाः महाराजं विकलाङ्गं भावयेयुः'' इति ।

दोषरहितं नेत्रं यैः कलाकारैः चित्रितं तत् चित्रं पश्यन् कनकसेनः - 'महाराजस्य रूपसाम्यमेव अस्मिन् नास्ति' इति वदन् तदपि तिरस्कृतवान् ।

एवं केनापि चित्रकारेण कनकसेनस्य इच्छानुगुणं चित्रं न चित्रितमेव ।

अस्मिन् समये शशाङ्कनामकः कश्चित् चित्रकारः जीविकाम् अन्विष्यन् एतत् राज्यम् आगतः । तेनापि राज्ञः घोषणा श्रुता । अतः सः कनकसेनसमीपम् आगत्य - 'बृहच्चित्र-निर्माणे अहं समर्थोऽस्मि' इति निवेदितवान् ।

राजा कनकसेनः एतत् श्रुत्वा आश्चर्यचकितः सन् - ''प्रसिद्धाः चित्रकाराः एव पराजयं प्राप्तवन्तः सन्ति । एवं स्थिते अस्मिन् विषये भवतः प्रवेशः कथं भवितुम् अर्हति ? इतः पूर्वं चित्रकारैः यानि चित्राणि चित्रितानि तानि पश्यतः मम विषादः उत्पन्नः अस्ति । यदि भवता उत्तमं चित्रं न निर्मीयेत तर्हि दण्डः अनुभोक्तव्यः भवेत् । अतः सम्यक् आलोच्य निर्णयं श्रावयतु'' इति उक्तवान् ।

तदा शशाङ्कः राजानम् अवदत् -''महाराज, मम काचन प्रार्थना अस्ति'' इति ।

तत् श्रुत्वा राजा – ''यत् भवान् वक्तुम् इच्छति तत् निस्सङ्कोचं वदतु'' इत्युक्तवान् ।

''दिनद्वयं यावत् अहं राजभवने भवता सह वासं कर्तुम् इच्छामि । एतदर्थम् अनुमतिः दातव्या भवता'' इति अवदत् शशाङ्कः ।

''अस्तु, श्वः आगच्छतु'' इति वदन् कनकसेनः ततः निर्गतः ।

परेद्यवि शशाङ्कः राजभवनम् आगतः । राज्ञः चलनादिकं सर्वं बहुसूक्ष्मतया परिशीलितं तेन । ततः पञ्चदश दिनानि यावत् महाराजस्य चित्रस्य निर्माणे समयं यापितवान् सः । षोडशे दिने सः तत् चित्रम् आनीय राज्ञे प्रदर्शितवान् । चित्रदर्शनेन कनकसेनः अतीव सन्तुष्टः । हसन्मुखः सन् सः तत् चित्रं सर्वेभ्यः सभाजनेभ्यः दर्शितवान् ।

चित्रं पश्यन्तः सर्वे सभासदः सन्तुष्टाः भूत्वा करताडनं कृतवन्तः ।

तदा शशाङ्कः सर्वान् नमस्कृत्य अवदत् – ''राजा चित्रसेनः जनान् पुत्रवत् पालितवान् । तादृशस्य राज्ञः जयकारं कर्तुं कस्यापि नास्ति अलसता । अपि च भवन्तः सर्वे जानन्त्येव यत् राज्ञः चित्रसेनस्य मृगयायाम् अतीव आसक्तिः इति । अतः मृगयायां मग्नं स्वस्य शौर्यप्रदर्शने निरतं तं राजानं द्रष्टुमपि सर्वे उत्सुकाः एव'' इति ।

सभासद्भिः पुनः सन्तोषेण जयघोषः कृतः । महाराजम् अश्वारूढं, दूरे स्थितं व्याघ्रं लक्ष्यीकृत्य धनुषि बाणं संयोज्य स्थितं च चित्रितवान् आसीत् शशाङ्कः । तस्मिन् समये राज्ञा स्वस्य वामनेत्रं पिहितम् आसीत् । अतः तदीयः दृष्टिदोषः न ज्ञायते स्म ।

एतत् पश्यन् सभायां स्थितः आस्थानस्य प्रधानचित्रकारः उत्थाय शशाङ्कम् आलिङ्ग्य अभिनन्दनं कुर्वन् उक्तवान् – ''शशाङ्कवर्य ! भवान् श्रेष्ठः कलाकारः इत्यत्र नास्ति सन्देहः । भवति स्थितं गभीरचिन्तनं सूक्ष्मदृष्ट्या पर्यवेक्षणं च श्लाघनीयम् एव । सामान्यरूपयुक्तमपि सुन्दरतया प्रदर्शयितुं विशेषकौशलवान् एव शक्नुयात् । भवान् निश्चयेन श्रेष्ठः चित्रकारः अस्ति'' इति ।

राजा कनकसेनः अमूल्यानि रत्नाभरणानि दत्त्वा शशाङ्कं सत्कृतवान् । ततः राजभवनस्य शारदाकलानिलये पूर्वजानां राज्ञां चित्रैः सह शशाङ्केन चित्रितं चित्रमपि स्थानम् अलभत ।





# प्रणमामः कल्पनाचाव्लाम्



हृदयकम्पिका अन्तरिक्षदुर्घटना भारतमूलायाः कल्पनाचाव्लायाः प्राणान् अहरत् । एषा घटना समग्रे विश्वे शोकच्छायां प्रासारयत् ।

हरियाणाराज्ये 'करनाल'-नामके नगरे वसतोः बनारसीदास-संयोगितयोः पुत्री कल्पना आ बाल्यात् एव इच्छति स्म चन्द्रम् । एतां गृहजनाः प्रीत्या निर्दिशन्ति स्म – 'मोटू' इति । यथा यथा सा वयसा प्रवृद्धा तथा तथा विमान-विषये तस्याः आसक्तिः अपि प्रवृद्धा । करनाल-नगरे 'फ्लायिङ्ग्क्लब्' आसीत् । अतः तत्र सञ्चरन्ति स्म बहूनि विमानानि । कल्पना च आकाशे डयमानानि विमानानि घण्टां यावत् पश्यति स्म ।

सप्तदशे (१७) वयसि कल्पना आभियान्त्रिक-पाठ्यक्रमस्य अध्ययनाय चन्दीगढस्थं पञ्जाब-इञ्जनियरिङ्ग्महाविद्यालयं गतवती । तत्रापि सा स्वप्नं पश्यति स्म – चन्द्रे पदं स्थापनीयम् इति । स्वसखीः एतं स्वप्नवृत्तान्तं वदति स्म अपि सा । ततः सा एरोस्पेस् -इञ्जनियरिंग्विषये स्नातकपदवीं प्राप्य अमेरिकास्थं टेक्सास्विश्वविद्यालयं गतवती । कोलरैडोविश्वविद्यालयात् सा डाक्टरेट्-उपाधिम् अधिगृहीतवती ।

१९९८ तमे वर्षे अन्तरिक्षोड्डयनाय प्रशिक्षणं प्राप्तुं सा 'नासा'(NASA)संस्थां प्रविष्टवती । १९९७ तमे वर्षे नवम्बरमासस्य १९ दिनाङ्के अन्तरिक्षं प्रति गच्छतः 'कोलम्बिया'नामकस्य उपग्रहस्य चालकदलस्य सदस्यत्वेन चिता जाता सा । एतेन 'एतादृशम् अन्तरिक्षप्रयाणं कुर्वती प्रथमा भारतीयमहिला' इति ख्यातिः अधिगता तया । अन्तरिक्षप्रयाणस्य अङ्गतया यानात् बहिः गच्छन्त्या तया 'आकाशसञ्चारः' (स्पेस् वाक्) अपि कृतः ।

गते जनवरीमासे 'कोलम्बिया'यानस्य द्वितीयम् उड्डयनं यदा निश्चितं तदा एषा अपि तदर्थं चिता जाता । तदा सा आत्मना सह ध्वजं नेतुम् इच्छन्ती तदर्थं स्वस्य अध्यापिकायाः निर्मलानम्बूदरी-पाड्वर्यायाः सम्पर्कं कृतवती, या च इदानीं बेङ्गलूरु-नगरे उद्योगिनी अस्ति । तया कौशेयध्वजः कश्चन दत्तः, यत्र च शिष्यायै आशीर्वादपूर्वकं ध्वजं यच्छन्त्याः अध्यापिकायाः चित्रम् आसीत्, अधः च लिखितम् आसीत् यत् 'सदा मार्गस्य उपदेष्ट्री' इति ।

वस्तुतः कल्पना मार्गस्य उपदेष्ट्री एव आसीत् । प्रतिवर्षं सा करनालनगरे स्थितस्य टागोरबाल-निकेतनस्य (यत्र च सा अधीतवती आसीत्) द्वयोः छात्रयोः 'नासा'दर्शनस्य प्रायोजकत्वं स्वीकृतवती आसीत् । एवं बालान् वैज्ञानिकप्रपञ्चं दर्शयन्ती सा तेषु दृढसङ्कल्पं, धैर्यं, साहसं, दूरदर्शितां च पूरयति स्म ।

अन्तरिक्षयानात् सा चन्दीगढस्थं स्वविद्यालयं प्रति सन्देशं प्रेषितवती आसीत् – ''स्वप्नात् निर्गत्य सफलताम् अवाप्तुं मार्गः तु अस्ति एव । तां प्राप्तुम् अन्तर्दृष्टिः, अग्रे गन्तव्यम् इत्येषा साहसबुद्धिः, कार्यैकतत्परतारूपः कश्चन अध्यवसायश्च नितराम् आवश्यकः'' इति ।

एषः सन्देशः युवजनताम् उद्दिश्य सन्दिष्टा अस्ति, यया च अल्पं कष्टं प्राप्य हतोत्साहिन्या न भवितव्यम् ।

कल्पना चाव्ला भारतस्य गौरवं वर्धितवती अस्ति । वयं तस्यै अर्पयामः प्रणामान् ।



# धर्मयुद्धम्

विक्रमदेवः नाम राजा पूर्वम् अलकापुरं पालयति स्म । तस्य नीलकण्ठनामकः कश्चन वीरः सेनापतिः आसीत् । कदाचित् विजयदशमीदिने राजा उद्याने मन्त्रिभिः सेनापतिभिः च साकं वार्तालापं कुर्वन् उपविष्टः आसीत् । रात्रिसमयः आसीत् सः । चन्द्रिका सर्वत्र प्रसृता दृश्यते स्म । तदा अकस्मात् कश्चन अश्वारोही तत्र आगत्य अश्वात् अवतीर्य राज्ञः पुरतः स्थितवान् ।

कुपितः राजा तं पृष्टवान् - ''भवान् कः ?'' इति ।

तेन उक्तम् - ''अहं योद्धा अस्मि'' इति ।

''तदस्तु, । अत्र एवम् आगतवतः भवतः आशयः कः ?'' इति राज्ञा पृष्टः सः अवदत् - ''योद्धुः अन्यः कः अभिलाषः भवितुम् अर्हति, अन्यैः सह युद्धकरणात् ऋते ? भवतः आस्थाने स्थितेषु कोऽपि मया सह योद्धुं शक्नुयात् किम् ?'' इति ।

तदा सम्मिलिताः सर्वे अपि तस्य दर्शनात् भीताः आसन् । यतः तस्य आकृतिः एव तादृशी आसीत् । तस्य नेत्रे काचित् अपूर्वा कान्तिः विलसति स्म । तस्य हस्ते तीक्ष्णः कश्चन खड्गः आसीत् ।

''वीरः सेनापतिः नीलकण्ठः भवता सह युद्धं करोति'' इति अवदत् राजा । एतत् श्रुत्वा नीलकण्ठः उत्थितः । तदा सः योद्धा हसन् अवदत् - ''मम हस्ते स्थितः खड्गः दृश्यते खलु ? भवतु कोऽपि अनेन खड्गेन कण्ठे एकवारं प्रहारं मत्तः स्वीकरोतु । यः प्रहारं स्वीकरोति सः आगामिनि वर्षे अस्मिन् एव दिने मम कण्ठे प्रहारं करोतु'' इति ।

एतं नियमं श्रुतवन्तः सर्वे आश्चर्यचकिताः अभवन् । 'एतादृशस्य तेजोयुक्तस्य खड्गस्य प्रहारं प्राप्य यः कोऽपि किं जीवेत् ? यदि जीवेत् तर्हि एव खलु आगामिनि वर्षे अस्य योद्धुः कण्ठे प्रहर्तुं शक्येत ? जीवनस्य एव असम्भवे प्रहारस्य का वा कथा ?' इति अचिन्तयन् ते ।

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



सः योद्धा प्रतीक्षमाणः आसीत् - कः अग्रे आगच्छेत् इति । तदा नीलकण्ठः झटिति उत्थाय तस्य हस्तात् खड्गम् आकृष्य महता बलेन तस्य योद्धुः कण्ठे प्रहृतवान् ।

आश्चर्यम् !! खड्गः कण्ठस्य मध्यभागं प्रविष्टः चेदपि रक्तस्य बिन्दुरपि न पतितः ! सः योद्धा निश्चलः सन् तिष्ठति !! क्षणानन्तरं सः स्वकण्ठे स्थितं खड्गं स्वयमेव निष्कास्य पूर्ववत् स्थितवान् ।

ततः स हसन् नीलकण्ठम् उद्दिश्य - "भवतः अवकाशः समाप्तः । इतः परं मम अवकाशः । स्मरतु एतत् । आगामिनि वर्षे अस्मिन् एव दिने नियमानुसारं वनदुर्गं प्रति भवान् आगच्छतु । अहं भवतः निरीक्षायां स्थास्यामि" इति वदन् ततः निर्गतः एव ।

वर्षमेकम् अतीतम् । विजयदशमीदिनमपि सन्निहितम् । गतवर्षस्य सा घटना पुनः पुनः नीलकण्ठस्य स्मरणपथम् आगच्छति स्म । नियमानुगुणं वनदुर्गं प्रति गन्तव्यम् । नो चेत् राज्यस्य अपयशः । अतः सर्वान् आपृच्छ्य नीलकण्ठः वनदुर्गं प्रति प्रस्थितः ।

सः अरण्ये बहुदूरं गतवान् । एकत्र अश्वात् अवतीर्य सः कस्यचित् वृक्षस्य अधः अश्वं बद्धवान् । तावति काले तेन कस्याश्चन स्त्रियाः रोदनशब्दः श्रुतः । धावन् तत्र गतः सः लुण्ठाकैः अभिभूतां काञ्चन राजकुमारीम् अपश्यत् । खड्गहस्तं नीलकण्ठं दृष्टवन्तः ते लुण्ठाकाः भयेन पलायिताः ।

नीलकण्ठः राजकुमारीं सान्त्वयन् - 'किं प्रवृत्तम् ?' इति पृष्टवान् ।

तदा राजकुमारी स्वस्य परिस्थितिं निवेद्य - "अद्य भवता मम प्राणाः रक्षिताः । भवतः साहाय्यम् अहं सर्वदा स्मरामि । एतत् अङ्गुलीयकं स्वीकरोतु । एतत् भवतः समीपे भवति चेत् आयुधप्रहारादपि भवतः शरीरे किमपि न भवति" इति उक्त्वा अङ्गुलीयकं दातुम् उद्युक्ता ।

किन्तु नीलकण्ठः अङ्गुलीयकं न स्वीकृतवान् । सः अवदत् - "वीरः यथा युद्धं कर्तुं, तथैव प्रहारं प्राप्तुम् अपि सन्नद्धः स्यादेव । यः युद्धमात्रम् अभिलषति न तु प्रहारं, सः वीरः न, अपि तु भीरुः । अहं सर्वदा धर्मयुद्धमेव इच्छामि" इति ।

एतावद् उक्त्वा सः राजकुमार्याः अनुमतिं प्राप्य ततः प्रस्थाय समीपे स्थितां नदीं प्राप्तवान् स्नानं कर्तुम् । सः यथा न जानीयात् तथा तम् अनुसृत्य आगता राजकुमारी तत्

अङ्गुलीयकं तस्य वस्त्रस्य मध्ये संस्थाप्य ततः निर्गता । नीलकण्ठः एतत् न ज्ञातवान् एव ।

द्वितीये दिने तेन वनदुर्गं प्राप्तम् । सः योद्धा अपि दृष्टः । अस्य दर्शनात् सन्तुष्टः सः योद्धा - ''भवान् वचनपरिपालकः । भवन्तं दृष्टवतः महान् आनन्दः अभवत् मम'' इति उक्तवान् ।

नीलकण्ठः नियमानुगुणं प्रहारं स्वीकर्तुं सिद्धः अभवत् । तेन उक्तम् - ''अहं सिद्धः अस्मि । प्रहारं करोतु'' इति ।

तदा स योद्धा उक्तवान् - ''प्रहारानन्तरम् अपि अहं जीवेयम् इति किं भवान् चिन्तयति ? महामूर्खः भवान्'' इति । ततः खड्गम् उन्नीय महता वेगेन कण्ठे प्रहृतं तेन ।

खड्गः कण्ठे लग्नः । किन्तु कण्ठात् रक्तस्य बिन्दुरपि न पतितः । योद्धा आश्चर्येण दिग्भ्रान्तः । नीलकण्ठः अपि अनया घटनया दिग्भ्रान्तः एव । नीलकण्ठः स्वस्य कण्ठात् खड्गं यदा निष्कासितवान् तदा पूर्ववत् एव आसीत् तदीयः कण्ठः ।

वनदुर्गस्य सः योद्धा एतत् अङ्गीकर्तुं न सिद्धः । अतः सः 'वञ्चना वञ्चना' इति वदन् पुनः तस्य कण्ठे प्रहर्तुम् खड्गम् उन्नीतवान् । एतत् दृष्ट्वा नीलकण्ठोऽपि स्वस्य खड्गं निष्कासितवान् ।

तावति काले वनदुर्गस्य महाराजः राजकुमार्या सह तत्र आगतः । नीलकण्ठः राजकुमारीम् अभिज्ञातवान् - मार्गे या लुण्ठाकैः अभिभूता आसीत् सा एवा एषा इति । राजकुमारी अपि एतम् अभिज्ञातवती । तया सः उक्तः - ''मया तत् अङ्गुलीयकं भवतः वस्त्रे गोपितम् । तेनैव भवान् योद्धुः प्रहारं प्राप्यापि जीवितुं शक्तः'' इति ।

वनदुर्गस्य महाराजः नीलकण्ठस्य न्यायपरत्वं साहसं च अभिनन्द्य स्वकुमारीं तस्मै दत्त्वा विवाहं सवैभवं निर्वर्तितवान् । सः योद्धा अपि दम्पत्योः आशीर्वादवचनानि उक्तवान् । तदा महाराजः रहस्यम् उद्घाटितवान् यत् अहमेव विजयदशमीदिने एतं योद्धारम् एतादृशं द्वन्द्वयुद्धं कर्तुम् अलकापुरं प्रति प्रेषितवान् आसम्, योग्यस्य वरस्य अन्वेषणम् एव एतस्य उद्देशः आसीत् इति ।

एतत् श्रुत्वा तत्र सम्मिलिताः जनाः आश्चर्येण मूकाः अभवन् ।



# अल्पवयस्कः

विजयपुरं विन्ध्यपर्वतीयराज्येषु अन्यतमं लघुराज्यम् । प्रतिवेशिराज्यानि विजयपुरस्य विषये शत्रुभावं प्रदर्शयन्ति स्म । अतः तस्मिन् राज्ये सदापि युद्धवातावरणम् एव दृश्यते स्म । एतादृशे एव काले कदाचित् तस्य देशस्य मन्त्रिणः आकस्मिकमरणं संवृत्तम् ।

तस्य स्थाने नूतनः कश्चन नियुक्तः जातः । सः योग्याभिः सूचनाभिः राज्ञः साहाय्यं करोति स्म । एतस्य कारणतः प्रतिवेशिराज्यैः सह उत्तमसम्बन्धः क्रमेण प्रवृद्धः । परस्परद्वेषभावना क्रमशः अपगता । कदाचित् मन्त्री रमाकान्तशर्मा राजानम् अवदत् - ''महाराज ! अहं तु वृद्धः जातः अस्मि । अतः एतस्मात् पदात् निवृत्तिं प्राप्तुं मह्यम् अनुज्ञा दातव्या कृपया । मम तु भाति यत् अल्पवयस्कः कोऽपि यदि एतस्य देशस्य मन्त्री भवेत् तर्हि वरं स्यात् इति'' इति ।

''किञ्चित्कालम् इतोऽपि भवान् एतं पदभारं निर्वहतु'' इति अवदत् राजा । किन्तु रमाकान्तः एतत् न अङ्गीकृतवान् । तदा राजा तम् अवदत् - ''प्रधानमन्त्रिस्थानाय योग्यं कञ्चित् अल्पवयस्कं भवान् एव चिनोतु'' इति ।

राज्ये त्रयः उपमन्त्रिणः आसन् एव । तेषु कञ्चित् प्रधानमन्त्रित्वेन चितवान् रमाकान्तशर्मा ।

तेन चितः आसीत् अशीतिवर्षीयः । रमाकान्तशर्मणः तु आसीत् नवतिः वर्षाणि । तस्मात् अपि अल्पवयस्कः तु आसीत् एव खलु नूतनतया चितः ?





Do you want your children to sharpen their faculties by working on puzzles?
Come to Junior Chandamama for loads of puzzles and games.



Are you looking out for interesting new stories to be read out to the kiddies?
Pick up a copy of Junior Chandamama, and you'll find them.



Does your child have a taste for colouring and you want to develop the habit?
Junior Chandamama is what you must get for your child.




Good habits begin when young. That's what you think, but don't know how to drill this into your child's mind.
Check out Junior Chandamama where values are taught subtly.



Want your kid to learn all about the culture and heritage of India?
Only Junior Chandamama can help you.

# Junior CHANDAMAMA

**FIRST ISSUE TO HIT THE STANDS IN APRIL 2003!**

Special introductory offer to child-subscribers!
Rs. 100 for 12 issues
( instead of Rs. 120 )
Offer closes on June 30, 2003.

PAGE AFTER PAGE WILL
KINDLE YOUR CHILD'S IMAGINATION
ISSUE AFTER ISSUE MONTH AFTER MONTH

# कालोऽयं मनोविनोदस्य

## चित्राणां वर्णलेपनं कुर्वन्तु

एतानि चित्राणि वर्णलेपनार्थं भवतां निरीक्षां कुर्वन्ति । वर्णपेटिकाम् उद्घाटय आरम्भं कुर्वन्तु वर्णलेपनस्य ।

अहो ! अयं खलु नदीतीरस्य प्रशान्तः परिसरः !



### अयम् अन्विष्यताम्

अत्र कश्चित् स्वस्थानात् लुप्तः भातः अस्ति । सः कुत्र इति अन्विष्य किं तं तदीयं स्थानं प्रापयेयुः भवन्तः ?



## द्राक्षागणना

एतानि सन्ति मोहननकानि द्राक्षागुच्छानि । तिष्ठन्तु ! तिष्ठन्तु ! यदि खादितुम् इष्यते तर्हि आदौ क्रियतां तेषां गणना ।



## स्थानात् च्युतानि

हम्... अत्र सर्वाणि सुष्ठु स्थितानि न सन्ति । कलावित् त्वरया कानिचन वस्तूनि जीविनः वा अस्थाने चित्रितवान् अस्ति । तेन कुत्र दोषः कृतः अस्ति इति किं भवन्तः दर्शयितुं शक्नुयुः ?

(उत्तराणि ६६तमे पृष्ठे)

लिख्यतां शीर्षिका

# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'फेब्रवरी'मासस्य चित्रशीर्षिकाप्रेषकः -

के. आर्. वेदनारायणः

पश्चिमप्रशान्तिः - ६, ए - २३

प्रशान्तिनिलयम्, आ.प्र. - ५१५१३४

### पुरस्कृतशीर्षिका





आसने उपवेशनं स्वास्थ्यकरम् ।
वाहनस्योपालम्बनं सुखावहम् ॥

**उत्तराणि मनोविनोदस्य (पृष्ठसङ्ख्या (६४-६५)**

द्राक्षागणना - १९ द्राक्षाः

स्थानच्युतानि - १) कादम्बस्य कर्णौ स्तः । २) मकरस्य शृङ्गे स्तः । ३) उद्यानपुष्पं नद्याम् अस्ति । ४) मीनः भूमौ अस्ति । ५) कीटः पक्षवान् दृश्यते ।

अयम् अन्विष्यताम् - शशस्य पार्श्वे विद्यमानः मीनः दृष्टः किं भवद्भिः ?

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

